महर्षिप्रवरश्रीकृष्णद्वैपायनप्रणीत-

# श्रीमद्भागवतम् ।

श्रीश्रीपादश्रीधरस्वामिकृतभावार्थदीपिका, श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी, श्रीमद्विशिष्टाद्वैत-सिद्धान्तप्रतिष्ठापनाचार्यवर्यश्रीसुदर्शनसूरिकृतशुकपक्षीयसमाख्याटीका, तदनुगामिश्रीमद्वीर-राघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका, श्रीमन्माध्वसिद्धान्तधुरन्धरश्रीमद्विजयध्वजतीर्थकृत-पदरत्नावली, श्रीगौडीयवैष्णवाचार्य्यप्रवरश्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भाख्यटीका, श्रीमद्वि-ष्णुस्वामिसिद्धान्तनिर्वाहकाचार्यप्रवरश्रीमद्वल्लभाचार्य्यकृतसुबोधिनी, श्रीमद्विश्वनाथचक्र-वर्त्तिकृतसारार्थदर्शिनी, श्रीनिम्बार्कसम्प्रदायि-श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपाख्य-टीका इति नवभिर्व्याख्याभिर्भाषानुवादेन च समलङ्कृतम्

तदिदं

परमहंसपरिव्राजकाचार्यपूज्यपादश्रीमत्स्वामिप्रकाशानन्दसरस्वतीप्रवरशिष्येण,

## श्रीनित्यस्वरूपब्रह्मचारिणा

सम्पादितम्

वङ्गदेशान्तर्गत ताड़ास भूपति श्रीराधाविनोद प्रेम सेवा परायण राजर्षिराय-

"श्रीवनमालिराय बहादुरस्य"

सम्पूर्णसाहाय्येन

प्रकाशितञ्च ।

तच्च

श्रीवृन्दावन श्रीरङ्गमन्दिरस्थ पं० भागवताचार्य द्वारा

काञ्चीमण्डलान्तर्वर्त्ति 'कान्दूर' पं० श्रीरङ्गाचार्यद्वारा च संशोध्य

श्रीवृन्दावनधामनि

स्वकीये "श्रीदेवकीनन्दन" यन्त्रालये

मुद्रापितम् ।

सम्वत् १९६४

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

इति वृन्दावनस्य सर्वसम्पद्विस्ताराभिप्रायेण श्लेषेण वसन्त इव नवुल्लासक: उच्चैः ईरयन् वादयन् तच्च तदन्त:प्रवेशेन स्वस्यैव हर्षोदयात् श्रीवृन्दावनवर्त्तिनां निजप्रवेशज्ञापनेन प्रहर्षौत्सुक्याच्च स्वस्य यशोगृणद्भिरिति विहारारम्भे तेषां तत्प्रेममयहर्षभरोदय: सूचित:, आविशत् आविवेश प्रीत्यान्त: प्रविवेश श्लेषेण पशुपक्षिवृक्षादय: तत्रत्या: सर्वे श्रीकृष्णाविष्टा बभूवुरित्यर्थ: । कुसुमानामाकरमिति स्वभावत एव सदा सर्वपुष्पसमृद्धेः अनेन तथा पशव्यमिति स्वत एव पशूनां सुखासक्त्या तत्पालनप्रयासाभावेन च तथा गोपैर्वृत इति बलान्वित इत्येताभ्यां सुखविहारसामग्री दर्शिता अत एव विहर्त्तुकाम इत्येवोक्तम् ॥ २ ॥

अन्यामपि तां वर्णयन् श्रीभगवतो विहारारम्भमाह—तदिति । महान्तो भगवद्भक्ता: तन्मन:प्रख्यत्वेनात्यन्तस्वच्छत्वं श्रीभगवद्विहारयोग्यत्वं चोक्तं किन्त्वत्र समासप्रविष्ट: सरश्छब्दो बहुवचनान्त एव ज्ञेय:, तज्जलकणिकाव्याजेन महन्मनोवृत्तय इवेत्युत्प्रेक्षा च ध्वनिता निरीक्ष्य सर्वत: प्रसन्नदृष्टिप्रसारेणानुमोद्य मनो दधे प्रीत्या मनोऽभिनिविष्टं चक्रे भगवानपीति तन्मोहनत्वातिशयो द्योतित: ॥ ३ ॥

तत्र तत्र स्थाने स्थाने सर्वत्रेत्यर्थ: । श्री: सम्पत् भरो भार: अरुणेति तैर्व्याख्यातम् । यद्वा, तया तेन च हेतुना करणेन वा स्पृशच्छिखान् एवं श्रेष्ठत्वेन वनानां पतीन् वनस्पतीन् महावृक्षानित्युक्तं यद्यपि "वानस्पत्य: फलै: पुष्पात्तैरपुष्पाद्वनस्पति:" इत्यमरोक्त्या वनस्पतिशब्देन वृक्षसामान्यं नोच्यते तथापि विकुसमवायपर्यायात् तच्छब्देन वानस्पत्या अपि गृह्यन्ते स्मयन्तीति नर्महासं कुर्वन्ति गोप्य इवेत्यादौ तत्प्राकट्यात् तत्त्वादितिवाच्यस्य क्रीडोपाङ्गत्वेन एवमित्यादिना वक्ष्यमाणत्वात् तदैकात्म्येन सवयस्कतया सह सर्वदा क्रीडापरत्वेन बाल्ये सख्यांशप्राबल्यात् तथैवाऽग्रजस्य तदानीं गौणत्वमालक्ष्याह—अग्रजमिवेति, अग्रजमपि स्वसमिवेति च तथैवाभिप्राय:, दर्शयिष्यते च तद्भावद्वयं कस्यापि कदाचिदुद्भूतत्वं क्वचित् क्रीडापरिश्रान्तम् इत्यादिभ्यां अतोऽग्रजभावांशसद्भावेन नर्म चेदं स्तुतिरीत्यैव कृतम् नन्वेवमेतत् श्रेष्ठत्वादग्रजेनैव कथं न तस्मै नर्म निर्मितं तत्राह—आदिपुरुषेति आदिश्चासौ पुरुषश्चेति एवं कविना तु सर्वेनोदं तत्समर्पसङ्गीतमयीस्तुतिरपि तस्मिन्नेव पर्यवसायिता एतदपि कर्त्तव्येषु रमणविशेषेषु चित्तोल्लासेन प्रथममेकं क्रीडनमेव रन्तुं मनो दध इत्युक्तत्वात् एवं सनर्मवचनमपि भगवन्निर्मितत्वात् सर्वं यथावदेव ज्ञेयम् ॥ ४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

पञ्चमादुपरि आनवमात्पौगण्डम् आषोडशात्कैशोरम् ॥ १—४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ पौगण्डावस्थावस्थितयो रामकृष्णयो: काश्चित्क्रीडां वर्णयन् रामकर्तृकं धेनुकासुरभञ्जनम् उभयकर्तृकं तदनुचरभञ्जनं कृष्णकर्तृककालीयह्रदजलपानमूर्च्छितगोगोपोत्थापनं च वर्णयति पञ्चदशेन । तत: कैशोरानन्तरं प्राप्तपौगण्डवयसौ पशुपालने सम्मतौ पशुपालानां वा सम्मतौ तौ रामकृष्णौ सखिभि: सह गाश्चारयन्तौ पदै:पादविन्यासैर्वृन्दावनमतीव पुण्यं चक्रतु:, तत्तदा स्वकीर्तिं गृणद्भिर्गोपै: परिवृतो बलेन सह समन्वितो वेणुमुदीरयन्नादयन् पशून् पुरस्कृत्य विहर्त्तुमिच्छु: कुसुमानामाकरं पशुभ्यो हितं वनं प्राविशत् ॥ १ ॥ २ ॥

मञ्जू: रमणीयो नादो येषां तैरलिमृगपक्षिभिर्व्याप्तं महतां योगिनां मनसा तुल्यं स्वच्छं पयो यस्मिंस्तत्सर आश्रयत्वेनास्ति यस्य तेनैवमतिशैत्यमुक्तं शतपत्राणां गन्धो यस्य तेन वातेन जुष्टम् एवं परिमलयुक्तत्वमुक्तम् एवंविधं वनं निरीक्ष्य रन्तु मनश्चक्रे ॥ ३ ॥

अरुणपल्लवानां श्रिया सह फलानां प्रसूनानां च भरेण पादयो: स्पृशन्त्य: शिखा अग्राणि येषां तांस्तरून् वीक्ष्यादिपुरुष: श्रीकृष्ण: मुदा स्मयन्निवाग्रजं रामं प्रतीदं वक्ष्यमाणमाह ॥ ४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भवणामनाभ्यां दुरितहरणाय हरे: पौगण्डवयसि क्रियमाणं विक्रमं निरूपयत्यस्मिन्नध्याये तत: कौमारात्पौगण्डवय: तद्वर्षलक्षणां वय:श्रितौ प्राप्तौ पशुपालत्वेन सम्मतौ योग्यौ ॥ १ ॥

उदीरयन् ध्वनयन् कुसुमाकरं कुसुमोत्पत्तिस्थानम् ॥ २ ॥

मञ्जव: मनोहरा: घोषा येषाम् भ्रमराश्च मृगाश्च द्विजाश्च मञ्जुघोषै: अलिमृगद्विजै: आकुलं महतां नारायणचरणारविन्दनिरन्तरमनसां, मन:प्रख्यं मनस्तुल्यं निर्मलं पयो जलं यस्य तत्तथा महन्मन:प्रख्यपयश्च तत्सरश्च महन्मन:प्रख्यपय:सरस्तदस्यास्तीति, महन्मन:प्रख्यपय:सरस्वान् तेन शतपत्राणां पद्मानां गन्धोऽस्यास्तीति शतपत्रगन्धी तेन वातेन वायुना ॥ ३ ॥

पल्लवारुणश्रिया युक्तयो: पादयो: प्रसूनोरुभारेण स्पृशन्त्य: शिखा एव कराऽग्रकोटयो येषां ते तथा तान्वनस्पतीन् वृक्षान्दृष्ट्वा अत्र भक्तिभरभुग्नग्रीवा: पुरुषा: यथा पुष्पनिचयादिना मुकुन्दचरणारविन्दमर्चयन्ति, तथा वृक्षाश्च पुष्पभरोपनतशाखाकराग्रै: पूजयन्तीत्याशय: स्मेरार्थो बोद्धव्य: ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भ: ।

॥ १—२ ॥

स्मयन्निति नर्मस्तोत्रकं कुर्वन्ति गोप्य इवेत्यादौ तत्प्राकट्यात् तत्त्वादिति चापल्यक्रीडोपोद्घातकत्वेन एवमित्यादिना वक्ष्यमाणत्वाच्च तस्य सवयस्कतया सह सर्वदा क्रीडापरत्वेनैकात्म्येन सख्यांशभावात् तत्रैवाह—अग्रजमिवेति । अतस्तत्सद्भावेन नर्म चेदं स्तुतिरीत्यैव कृतम् एवं सनर्मवचनमपि भागवतत्वात् सर्वं यथावदेव ज्ञेयम् ॥ ४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

"यशोदानन्दयोरेवं निरोध: सुनिरूपित: गोपालानां निरोधोऽत्र सखीकाणां निरूप्यते ॥१॥ मध्यमोऽयं समस्तानां निरोध: परिकी-

## श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

त्यते । पञ्चधैवानुभावोऽत्र दुष्टनिग्रहरूपवान् ॥ आध्यात्मिकीमविद्यां वै दूरीकर्तुं तथाकृतिः । तदर्थं क्रमतोऽध्याया उभयेषां तथा द्वयम् । स्नेहाधिक्यसुसिद्ध्यर्थं स्नेहान्तो मध्यमः स्मृतः । प्रथमं त्वाह-योऽध्याये देहाऽध्यासो हि धेनुकः । तद्वधो ज्ञानपूर्वो हि फलावधि निरूप्यते । कालीय इन्द्रियाणां च दुर्विषयास्तद्विषं मतम् ततः सर्वविनाशः स्यादित्यन्ते मरणाभिधा । ततश्चोज्जीविताः सर्वे पुनर्देहान्तरस्थितिः ॥" तत्र प्रथमं ज्ञानं निरूपयन् भगवान् देशशुद्धि वनप्रवेशे वनक्रीडायां मनश्च कृतवानित्याह-त्रिभिः ततश्चेति । स्वत एव ज्ञानं सात्त्विकत्वात् तत्रोद्वेगो न भवतीति तत्र क्रीडायां मनो निरूपणीयम् । प्रवेशश्च ग्रामाद्भिन्नप्रक्रमार्थो वक्तव्यः तत्र प्रथमं भगवतो मध्यमलीलायां वृन्दावनस्यैव दैत्यभूयिष्ठत्वात् शुद्धिमाह-तत इति । पौगण्डं वयः षष्ठं वर्षमारभ्य नववर्षपर्यन्तं पुरुषार्थचतुष्टयसाधककालाभिमानिन्यो देवता भगवन्तं सेवितुमागताः पौगण्डशब्देनोच्यन्ते दोषाभावः प्रथमं निरूपणीय इति पञ्चात्मकः कालः पूर्वं निरूपणीयः ततस्तदनन्तरं पौगण्डमेव वयस्तारुण्यमिवाश्रितौ व्रजे पशुपालानां सम्मतौ बभूवतुः पशूनां पालने वा योग्यौ तौ रामकृष्णौ सचारणौ चरित्रमुभयोरिति अतो गाश्चारयन्तौ सखिभिः सख्यपर्यन्तमागतैर्बालकैः गोरक्षाधर्मः स तैः कार्यते अन्यथा सख्यपर्यन्तं गता यदि विक्षिप्ता भवेयुस्तदा वैकुण्ठे नवलक्षणाभास्वमसमर्पणं नोपपद्येरन् सखिभिः समं वा वृन्दावनमतीव पुण्यं चक्रतुः समत्वाद्यागभूमिरेषा इदानीं पुण्यरूपैव जाता-पदैः पाद्न्यासैः पादयोः पुण्यतिकायोऽस्तीति पूर्वमवोचाम: पुण्यं ऐहिकपारलौकिकसाधनं कामानुरूपफलदं च इयमपि निःसाधनानां स्वयमेव भगवत्प्राप्तिसाधनरूपं लीलाविशिष्टं सत् स्वतः फलरूपम् अयमेवातिशयो श्रेयः कामाभावेऽपि भगवत्प्रापकत्वं च ॥ १ ॥

ततो भगवान् विशेषाकारेण वृन्दावनप्रवेशं कृतवानित्याह-तन्माधवइति । सामान्यलीला पश्चैवोक्ताः तत्र तत्र माधवो लक्ष्मीपतिः लक्ष्म्या सह क्रीडां कर्तुं शब्दब्रह्म च सङ्ग्रहार्थमुदीरयन् वेणुरिति वक्ष्य इश्च वयो स्वरूपानन्दविषयानन्दावग्णु यस्मात् स वेणुरुभयविस्मारकस्तद्भावेन विषयिणो मुक्ताश्च सर्वे समायान्ति आध्यात्मिका आधिदैविकाश्चोद्बुद्धा भवन्ति ततो भूमो गोपैराधिदैविकैरत एव स्वयशो गुणाद्भिः भगवद्यशस्तैर्निरन्तरं गीयते सामर्थ्यार्थबलान्वितः बलभद्रो हि क्रियात्मा क्रियायां पशूनां विनियोग इति पशून् पुरस्कृत्य सानादौ क्रियाशक्त्या शुद्धान् कर्तुं वनमाविशत् स्थानमपि पशव्यं पशूनां हितं भगवता पूर्वं तथा कृतत्वात् विहर्तुकाम इति तत्र विहारेच्छया प्रविष्टः विहारे क्रिया पूर्णा भवति रजसैव विहार इति स्थानस्य रजस उद्रेकमाह-कुसुमाकरमिति कुसुमानां रजोविकासानामाकरं स्थानभूतं वनमिति वनलीला सात्त्विकीति सत्त्वप्रधानैव रजोलीला ॥ २ ॥

पश्चाद्भगवान् तत्र स्थिताभिः सर्वाभिरेव देवताभिरलौकिकीभिः सह रन्तुं मनः कृतवानित्याह-तद्दिति । मञ्जुघोषो येषामलीनां मृगाणां द्विजानां च कुलैराकुलं दृष्ट्वा रन्तु मनो दधे इति सम्बन्धः अत्र त्रिविधा अपि मञ्जुघोषाः तत्र भूदोषो नास्ति इति ज्ञातव्यं तृणपुष्पफलात्मकं च वनं भवति तत्सम्बन्धिनश्चेत्सिद्धास्तदा तृणादयोऽपि निर्दुष्टा एव भ्रमरादीनां मञ्जुघोषत्वस्यानुकिसिद्धत्वेऽपि यत्कथनं तेन लोकप्रसिद्धातिरिक्तो भगवत्स्वरूपनादानुभवानन्दजत्वलक्षणो मञ्जुत्वविशेषो यः स उच्यतेऽतो नानर्थक्यम् अत एव मृगाणामप्युक्तिः अन्यथा रसोद्दीपकत्वं तेषां लोकेन सिद्धमिति तदुक्तिरयुक्ता स्यात् स्वस्थितेभ्यो प्रियस्थितिज्ञापकत्वमपि मञ्जुत्वं तेषां ज्ञेयम्, किञ्च न केवलं दोषाभावस्तत्र किन्तु गुणपूर्णताऽपीत्याह-महन्मनःप्रख्यपयः-सरस्वता वातेन जुष्टमिति । अन्तरिक्षदेवस्याधिपत्यवोऽरण्यप्रतिष्ठास्तत्र वायुरुभयाधिपतिर्गवामरण्यस्य च स चेत् सर्वथा दोषरहितो गुणवांश्च भवति तदैव लीला सङ्गच्छते श्रमापनोदनार्थं च तस्यापेक्षा लोकसिद्धा वृन्दावने सामान्यतः सर्वदोषनिवृत्तेरुक्तत्वात् वायोरागन्तुकदोष एव परिहर्तव्यः जलं पुष्पाणि च तत्सम्बन्धीनि शैत्यमान्द्यसौरभ्याणि च गुणाः तथा सति वायुर्गाविवेचको भवति महतां मनोवत् यत् सरः सर्वदोषाभावपूर्वकगुणेषु निदर्शनं महतां मनस्ततोऽपि प्रकर्षेण ख्यातिर्यस्य भगवल्लीलोपयोगित्वात् एतादृशं पयस्तद्युक्तं सरो जयविक्षेपशून्यं शान्तं तरङ्गादिरहितम् अनेन स्वरूपमात्रं निरूपितं सद्विदपदेषु सत्स्वपि यन्महत्पदप्रदानं तेन सरसोऽपि नाल्पत्वं महत्परिमाणवत्त्वमेतल्लीलामध्यपातित्वं लीलाविष्टत्वं च ज्ञाप्यते, शतपत्राणि कमलानि कुशेशयानि पुष्पविशेषा वा तेषां गन्धोऽस्यास्तीति सौरभ्यं निरूपितं तेनापि चेत्सेवितं तदा भगवान् पशुगुणैः सह तत्र रमणार्थं प्रवृत्तः भृङ्गादिषु त्रयो गुणाः वाते च त्रयः अतो वृन्दावनं षड्गुणयुक्तं स्वसमाने च रमणं भवति ॥ ३ ॥

कदाचित्प्राकृतरतिं भगवान् करोतीति कस्यचिच्छङ्का स्यात् तत्परिहारार्थं वृक्षाणां भ्रमराणां मृगपक्षिणां भूमेश्च स्वरूपं वक्तव्यं वनं हि भूमिवृक्षात्मकं तत्तथा अपि यदि दुष्टा भवेयुः स्वरूपतोऽपि तदापि वनं त्याज्यमिति दोषाऽभावो गुणाश्च वक्तव्याः तान् भगवानेव जानाति बुध्यते च बलभद्र एव अतोऽग्रे प्रत्यक्षतो लीलां कर्तुं तेषां स्वरूपं बलभद्रं बोधयति—स तत्र तत्रेति । यदि वनस्था न स्वभावं प्रकटयेयुस्तूष्णीं वा तिष्ठेयुः तदा तेषां स्वरूपं भगवान् न वदेत् किन्तु त एव भक्ता इत्याह—तत्र तत्र सर्वत्र वने अरुणपल्लवानां श्रिया उपलक्षितान् फलप्रसूनयोः उरुभरेण स्वपादयोः स्पृशच्छिखान् वनस्पतीन् वीक्ष्येति पल्लवा अङ्गुलिस्थानीयाः तेन हस्ताभ्यां नमस्कारः सूच्यते फलानि पुष्पाणि च निवेदयन्ति साष्टाङ्गश्च नमस्कारः पादयोः शिखास्पर्शेन यथा सम्भवं सूचितः तानुद्भूतान् दृष्ट्वा भगवतो हर्षः स्मयन्निवेति मन्दहासो मुखप्रसादहेतुः बलभद्रस्य तद्दानात् विस्मयः आश्चर्यभावाद्विवेति बलभद्रोऽन्यावेशित्वेन बोधनीयः अन्यथा देवताचित्तमाभावे सा देवता नाविष्टा स्यात् । नन्वावेशापेक्षयाऽवतारो मुख्य इति कथं बलभद्रपरत्वेन तेषां निरूपणमित्याशङ्क्याह-अग्रजमिति । अग्रे स एवाविर्भूत इति तर्हि बोधनमनुचितमिति चेत्तत्राह-आदिपुरुष इति पुरुषोत्तमः ॥ ४ ॥

### श्रीभगवानुवाच ।

**अहो अमी देववरामरार्चितं पादाम्बुजं ते सुमनःफलार्हणम् ।**
**नमन्त्युपादाय शिखाभिरात्मनस्तमोपहत्यै तरुजन्म यत्कृतम् ॥ ५ ॥**

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

धेनूनां रक्षणं ज्येष्ठस्तुतिः स्वैः सह खेलनम् ।
धेनुकस्य वधो रक्षा विषात् पञ्चदशे गवाम् ॥

ततः पञ्चमवर्षक्रीडानन्तरं पशूनां पालने सम्मतौ गोपैः सम्मतीभूतौ तद्दिनं तु पाद्मे कार्त्तिकमाहात्म्ये दृष्टम्—

शुक्लाष्टमी कार्त्तिके तु स्मृता गोपाष्टमी बुधैः ।
तद्दिनाद्वासुदेवोऽभूद्गोपः पूर्वं तु वत्सपः ॥

इति पदैः पदचिह्नैर्ध्वजादिभिः पुण्यं चारु अतीवेति पूर्वमूनविंशतिचिह्नानां चरणयोर्लघुत्वाद्रेखाणामतिसूक्ष्मत्वेन स्पष्टीभावात् ॥ १ ॥

तद्वनं पशव्यं पशुभ्यो हितम् आसमन्ताद्विवेशत् माधव इति श्लेषेण वसन्त इव तदुल्लासकः ॥ २ ॥

तत्पञ्चेन्द्रियाह्लादकं वनं निरीक्ष्य मञ्जुघोषा अलयो मृगा द्विजाः पक्षिणश्च तैर्घोषमिति विविधेन सौस्वर्येण श्रोत्रस्य वातेन जुष्टं सेवितमिति व्यञ्जितेन साम्येन महतां मनःप्रख्यं मनःसदृशं वीतमधुरस्वच्छं पयो यत्र तत्सरः आश्रयत्वेनास्ति यस्य तेनेति शैत्येन च त्वगिन्द्रियस्य माधुर्येण रसनायाः शतपत्रगन्धिनेति सौरभ्येण नासायाः शतपत्रस्य सौन्दर्येण नेत्रस्याप्याह्लादकम् ॥ ३ ॥

अरुणपल्लवानां श्रीः शोभा अधोमुखत्वेन पादस्पर्शनात् फलानां प्रसूनानां चोरुभरेण पादयोः स्पृशन्त्यः शिखा येषां तान् वनस्पतीन् वृक्षान् विलोक्य स्मयन् स्मयमान इति विवक्षितस्य वनस्पतीनामुत्कर्षस्य पर्य्यवसाने सोत्कर्ष एव स्यात् स्वोत्कर्षस्य च स्वयमुक्तत्वनौचित्यात् मुदेत्यानन्दजनितेन गाम्भीर्याभावेनोक्त्या विना स्थातुमशक्तेश्च रामे सख्यभावोत्थेन स्मितेनानेन स्वमहोत्कर्षोऽपि मत्त एवेति व्यञ्जितः, अत एवाग्रिमश्लोके आदिपुरुषेति स्वनाम्नापि तस्य सम्बोधनं करिष्यते इवेति मदभिप्रायमिमं मदग्रजो मा बुध्यतामिति स्मितमिन्हुवानः स्व स्मयमित्यर्थः; तथा हि "श्रीवृन्दावनलक्ष्मीमाधुर्यैकव्याप्तचेतसा । तत्स्तवे हरिणा लब्धे निजोत्कर्षावसायिनम् ॥ तमालोच्य ततो राममपदिश्य व्यञ्जि स्मा । अतोऽत्र नैव तात्पर्यं रामोत्कर्षानुवर्णने ॥ सख्यभावात्तदा रामं नर्मोक्तमुदीरितम्" इति भागवतामृतीया सार्द्धकारिका, आदिपुरुष इति तदनुजत्वेऽपि स्वयं भगवत्त्वात्तदादिः ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इति प्रकटीकृतपौगण्डावस्थयोः राममाधवयोर्गोपालनादिलीलां सानुचरधेनुकासुरवधं कालियविषाद्गोपरक्षणं च पञ्चदशेऽस्मिन्नध्याये वर्णयति—तत इति । कौमारलीलानन्तरं पौगण्डवयः श्रितौ आश्रितपौगण्डावस्थौ राममाधवौ सखिभिः समं सह गाश्चारयन्तौ पदैः पादपद्मविन्यासैः वृन्दावनमतीव पुण्यं चक्रतुः ॥ १ ॥

तत्तदा कुसुमाकरं पुष्पाकरं गोपालानां प्रियं पशव्यं पशुभ्यो हितं वनं माधवः श्रीपतिः प्राविशत् ॥ २ ॥

तद्वनं निरीक्ष्य भगवान् अखण्डैश्वर्यो रन्तुं मनो दधे कथम्भूतम् मञ्जुमधुरो घोषो नादो येषां तैरलिमृगद्विजैराकुलं व्याप्तम् महतां मनोभिः प्रख्यानि तुल्यानि अत्युज्ज्वलानि पयांसि यस्मिन् तत्सरः आश्रयत्वेनास्ति यस्य तेन शीतलेन शतपत्रगन्धिना शतपत्रस्य पद्मस्य परिमलवता वातेन जुष्टं सेवितम् अनेन निविडवनसङ्घातत्वं मन्दगतित्वमपि द्योतितम् ॥ ३ ॥

स आदिपुरुषः प्रकृतिपुरुषप्रेरकः श्रीकृष्णः अरुणपल्लवश्रिया सह पादयोः स्पृशन्त्यः शिखा अग्राणि येषां तान् वनस्पतीन् वीक्ष्य मुदा स्मयन्निव अग्रजं श्रीराममाह, स्वभावत एव सदा प्रसन्नवदनत्वादिवेत्युक्तिः ॥ ४ ॥

---

ॐ कुञ्जाकृष्णास्वरूपाय नमः ।

श्रीशुक उवाच ।

श्रीशुक देवजी बोले, कि हे राजन् ! कौमार अवस्था बीते पीछे जब दोऊ भैया पौगण्ड अवस्थाकूं प्राप्त भये तब सब गोपन की सम्मति सों सखान सहित गावें चरावत श्रीवृन्दावन कूं अपने चरणन के सञ्चार सों अत्यन्त पवित्र करत भये ॥ १ ॥

अपने यश को गावनवारे गोपन के सहित और बलदेवजी सहित श्रीकृष्णचन्द्र वेणु को बजावत गैयान को आगे करके गायन को हितकारी, और पुष्पन की खान एसो जो वन है ता में विहार करवे की इच्छा सों प्रवेश करत भये ॥ २ ॥

मधुर सुरीले बोलनवारे भौंरा पशु पक्षी इन सों व्याप्त महत पुरुषन के मन की नाईं निर्मल जल जा मे भर्यो एसो सरोवरन के स्पर्श सें शीतल और मन्द सुगन्ध वारो पवन जा में चले ऐसे वा वृन्दावन कूं देखिके श्रीकृष्णचन्द्र के मन में खेलवे की इच्छा होत भई ॥ ३ ॥

वा वन में जहां तहां अरुण पल्लवन की शोभा फल फूलन के बोझ से वृक्ष लूम झूम रहे हैं झुक पड़े हैं, ताहि सों चरणन में जिनकी शिखा लगे ऐसे वृक्षन को देखके मुसकाय कें आदिपुरुष श्रीकृष्णचन्द्र बड़े भैया श्रीबलदेवजीसें ऐसे बोलत भये ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तरुजन्म येन तमसा कृतं तस्य तमसः पापस्यापहत्यै नाशाय अथवा येन स्थावरेण सर्वोपकारकं तरुजन्म कृतं

एतेऽलिनस्तव यशोऽखिललोकतीर्थं गायन्त आदिपुरुषाऽनुपदं भजन्ते।
प्रायो अमी मुनिगणा भवदीयमुख्या गूढं वनेऽपि न जहत्यनघात्मदैवम् ॥ ६॥
नृत्यन्त्यमी शिखिन ईड्य! मुदा हरिण्यः कुर्वन्ति गोप्य इव ते प्रियमीक्षणेन।
सूक्तैश्च कोकिलगणा गृहमागताय धन्या वनौकस इयान् हि सतां निसर्गः ॥७॥
(१)धन्येयमद्य धरणी तृणवीरुधस्त्वत्पादस्पृशो द्रुमलताः करजाभिमृष्टाः।
नद्योऽद्रयः खगमृगाः सदयावलोकैर्गोप्योऽन्तरेण भुजयोरपि यत्स्पृहा श्रीः ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

ते त्वां नमन्ति एवं स्थावरेष्वपि जन्मनि यदज्ञानरूपं तमोऽस्ति तस्यापहत्यै ॥ ५॥

हे अनघ! वने गूढमपि त्वां न त्यजन्ति त्वयि मनुष्यवेषेण निगूढे सति मुनयोऽलिवेषेण निगूढास्त्वां भजन्तीत्यर्थः ॥ ६॥

इयान् हि सतां निसर्ग इति यदात्मीयं सर्वस्वं गृहमागताय महते महापुरुषाय समर्पयन्तीति ॥ ७॥

तृणवीरुधश्च तव पादौ स्पृशन्तीति तथा करजाभिमृष्टा नद्यः स्पृष्टाः सदयैरवलोकनैः श्रीरपि यस्मै स्पृहयति केवलं तेन भुजयोरन्तरेण वक्षसा गोप्यो धन्या इति ॥ ८॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

अहो इति प्रहर्षे आश्चर्ये वा अमी इमे स्थावरयोनयोऽपि हे देववर! सर्वदेवोत्तम! सुमनसः पुष्पञ्च फलं च तदेवार्हणं पूजोपकरणमात्मनः शिखाभिरग्रभागैः श्लेषेण शिरोभिः उपादाय उपादेयत्वेन गृहीत्वा ते तव पादाम्बुजं नमन्ति नमस्कुर्वन्तः शिखाभिरेव तव पादाम्बुजे समर्पयन्तीत्यर्थः। कीदृशं पादाम्बुजम् अमरा ब्रह्मादिदेवा मुकाश्च तैरभ्यर्चितम्। ननु, कथं स्थावरयोनित्वं ज्ञानं तत्राह—तम इति। येषामीदृशो भावस्तेषामज्ञानं नास्त्येव प्रत्युत तमोऽपहत्यै पश्यतां शृण्वतां च तमोनाशाय यत् यैः श्रीवृन्दावनसम्बन्धि तरुजन्म कृतम् अङ्गीकृतम्। यद्वा, तमोऽपहत्यै पशुपक्ष्यादिचरस्थावरजङ्गमास्तिदुःखनाशाय नमन्ति के तेऽमी यत् यैस्तरुजन्म कृतं प्राप्तमित्यर्थः। एवं नित्यसिद्धान् प्रतिविवक्षितं साधनसिद्धान् प्रति तु आत्मनस्तमोऽपहत्यै तवाप्राप्तिदुःखनाशाय यद्वित्यादि यथा ब्रह्मणा प्रार्थितमिति भावः। एवं सर्वत्र प्रकारेण मुहुः सर्वेषामेव सुखं कार्यमिति श्रीविहारेच्छया प्रोक्तम् ॥ ५॥

एत इति। श्रीमदङ्गुल्या दर्शयति—अखिलेषामखिललोकानां तीर्थं संसारमलपावनं त्वदङ्घ्रिमाहात्म्यद्योतकगुणरूपं वा अनुपदं पथि पथि भजन्ते अनुवर्त्तन्ते त्वाम् अनुपदमिति पाठेऽपि तदेव तत्र युक्तमेवेत्याह, हे आदिपुरुषेति। सदातनः सर्वेषां तवैव तत्सेवकत्वादिति भावः। अत्रानुमिमीत इव प्राय इति भवत्सेवकत्वादिति भावः। अत्रानुमिमीत इव प्राय इति भवदीया भवतो नाना रूपस्योपासका ये तेष्वपि पूर्वस्य भव-

व्रजरूपस्य भवत उपासकास्तन्मुख्या ये मुनयः परममननशीलास्तद्रूपस्त्वद्भजनेन तत एवात्मत्र मौनशीलत्वेन चानन्या इत्यर्थः। तेषां गणाः अत एव श्लेषेण मुनयोऽपि गणा अनुगा येषां ते मुनीश्वरा इत्यर्थः। श्रीब्रह्मणापि दुर्लभत्वं श्रामाद् ते वने श्रीवृन्दावने गूढमन्यरूपोपासकैरज्ञातमपि अत्रैव कश्चित् क्रीडाविशेषाय निलीयस्थितमपि च न जहति तत्र हेतुः, आत्मदैवमिति। भवदीयमुख्या इति च अनयोश्च मिथो हेतुत्वं हे अनघ! न विद्यते भक्तानामघं यस्मिन् सः हे अपराधाग्राहिन्! परमकारुणिकेति यावत् अनघात्मदैवमित्येकं वा पदं तदेवमेषामभीष्टसिद्धिः कार्येति भावः। प्राय इति वितर्के श्रीनारदादिवत् यशोगानपरमहंस्यतदन्वेषणाऽनुगत्याविस्फारणात् ॥६॥

ईड्य! हे स्तुतियोग्येति लज्जया स्मित्वा विमुखीभवन्तमिवाग्रजमभिमुखीकरोति मुदेत्यस्य सर्वैरप्यनुषङ्गः ईक्षणेन प्रियं प्रीतिं मात्रं ते तुभ्यं जनयन्ति "कृष्णर्थानां प्रीयमाणः" ( १।४।३३ ) इति संप्रदानत्वं गोप्य इवेति वीक्षणस्य सुष्ठुतया प्रेम्णा च साम्यात् वैदग्ध्यावलम्बप्रेमत्वादिना तत्स्मरणाच्च अत एव श्रीरामप्रेयस्योऽप्यन्या ज्ञेयाः इत्थं पौगण्डमारभ्य तासु तस्य भावोदयः सूचितः। परमतेजस्वित्वेन पौगण्ड एव कैशोराद्याविर्भावात् तासामपि तादृशत्वात् सूक्तैः श्रीमधुरशब्दैः तत्र कुतः? गृहमागताय अभ्यागतायेत्यर्थः। तत्र "वाक् चतुर्थी च सूनृता" इति न्यायेन युक्तमेवेत्याह, इयानिति ॥ ७॥

एवं तत्कर्तृकसेवया तान् स्तुत्वा श्रीरामकर्तृकप्रसादेनापि धरण्यादिसहितान् एव तान् स्तौति—धन्येति। इयमादितो वर्तमाना विचित्रावतारस्पर्शसौभाग्यवती विशेषतः श्रीवराहदेवप्रसादातिशयलब्धमाहात्म्यापि अद्य त्वदवतारे एव धन्या परमप्रशंसनीयाऽभूत् आस्तां तावदन्या धन्यास्थं तत्संभवानां मध्ये लघिष्ठा इमाः श्रीवृन्दावनवासिन्यः तृणवीरुधस्तृणरूपा लता दूर्वाद्या अपि धन्याः यतस्त्वत्पादस्पृशः एवमुत्तरत्र च ज्ञेयमिति वचनं लिङ्गव्यत्ययेनानुवर्त्यं स्यादिति छान्दसो ङसो लुक् ततो यथास्थानमाकर्षणीयं तथा द्रुमा लताश्च करजैरङ्गुलिभिः किसलयादीनां सौकुमार्यपरीक्षया भूषणाद्यर्थच्छेदनाय वा स्पृष्टाः सन्तः "मालयवर्धि यः कश्चित्" इत्यादिवत् करजाः नखा इत्यर्थे तु तैरभिमर्षो नाम नागरतासूचकः किसलयादौ लेखो ज्ञेयः, स च श्रीगोपीनामुद्दीपनार्थः "पल्लवे-मा लताः" इत्यादिवत् तथा एताः नद्यः एतेऽद्रयोऽपि त्वत्पाद-

(१) अयंश्लोको विजयध्वजेनैकोनविंशतिसंख्यायामग्रेपठितः।

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

स्पृहः सन्त इति गम्यं योज्यं वा तेषु तस्यैव प्राधान्यात् नद्यस्तस्येत्यादौ गृह्णन्ति पादयुगलमिति हन्तायमद्रिरित्यादौ यद्वा-मकृष्णचरणस्पर्शप्रमोद इति वक्ष्यमाणाच्च अथ गोपीपर्यायां श्यामसारिवां तर्हि कथञ्चित्तद्वचोलग्नां दर्शयन् श्लेषेणाह, गोप्य इति । सत्त्वपितृन्यायवतीगोस्य पुनर्मन्त्रपितृधर्मतां प्राप्तस्य गोपकन्यापरिणयनमेव भविष्यतीति सूचयन्त्य इति भावः । तदेवम्भावी यस्तस्य प्रियात्वं प्राप्स्यन्तीभिः काभिश्चिद्-गोपीभिः सह विहारस्तस्य सूचना कृता यत्स्पृहेति श्री-वैकुण्ठनाथवक्षःस्थिता लक्ष्मीरपि यत्स्पृहेत्यर्थः । न केवलं स्पृहा-मात्रं किन्तु वक्ष्यते चाग्यन्नागपत्नीभिः "यद्वाञ्छया श्रीर्ललना-चरत्तपः" इति एवमप्यत्र श्रीगोकुले तदप्राप्तिः श्रीगोपीना-मिव तदनन्यत्वाभावात् तासु तदधिकारिणीष्वननुगतत्वाच्चेति भावः । अत्र सर्वेषां सर्वेषु सत्स्वपि तस्य तस्य प्रसादस्य-परमकाष्ठाप्राप्तत्वात् विशेषोक्तिरिति ज्ञेयम् ॥ ८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अमी तरवः सुमनःफलार्हणां सुमनःफलानुरूपं पूजासाध-नन्तमोऽपहत्यै "पाप्मापेत" इति श्रुतेः ॥ ५—६ ॥

निसर्गः स्वभावश्चरितमवलक्ष्यते ॥ ७—१२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवाह—अहो इत्यादिभिः चतुर्भिः स्वयमादिपुरुषोऽपि लोकमर्या-दास्थापनार्थमवतीर्णत्वात्स्वशेषभूतमपि शेषमग्रतोऽवतीर्णमात्मा-ग्रेण स्वतोऽधिकमिव सम्भावयन्नाह—अहो इति । हे देववर ! यद्वा, देववरैरमरैरर्चितं तव पादाम्बुजं पुष्पफलादिरूपं पूजासाधन-मुपादाय शिखाभिर्नमन्ति तरवः किमर्थमात्मनस्तमसः पापस्या-ऽपहत्यै नाशाय येन तमसा तरुजन्म कृतं सम्पादितं तस्य तमसो-ऽपहत्यै इत्यन्वयः ॥ ५ ॥

हे आदिपुरुष ! एते भृङ्गास्तवानुपदमखिललोकपावनं यशो गायन्तः भजन्ते तिरश्चां कथमेवंविधं ज्ञानं तत्राह—अमी अलयः प्रायेण भवद्वनेषु मुख्या मुनिगणाः एवात एवानघामात्मनां दैवतं गूढं गोपवेषेणापि शेषः । त्वां न जहति न त्यजन्ति ॥ हे ईड्य ! अमी शिखिनो मयूरा नृत्यन्ति तथा हरिण्यो गोप्य इवेक्षणेन ते तुभ्यं प्रियं कुर्वन्ति तथा स्वगृहं प्रत्यागताय ते कोकिलानां गणाः सूक्तैः प्रियं कुर्वन्ति एते कोकिलादयो वनौकसोऽपि धन्या एव सतां निसर्गः स्वभाव इयान् हि मृदूक्त्यादि-भिर्बहुमानमिवानेव हि ॥ इयं धरणी तृणानि वीरुधश्च धन्याः कुतः ? यतस्तव पादौ स्पृशन्तीति तथा तथा द्रुमलताश्च धन्याः कुतः करजैर्नखैरभिमृष्टाः तथा नद्यद्रयोऽपि धन्याः कुतः ? सदयै-रवलोकनैः त्वया वीक्षिता इति शेषः । तथा गोप्योऽपि धन्याः कुतः ? भुजयोरन्तरेण वक्षसा आलिङ्गिता इति शेषः । कथम्भूतेन यद्धि मिन्स्पृहा स्पृहावती श्रीः तेन ॥ ६—९ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इममेवार्थं विशदयति—अहो इति । देववर ! यद्वा, देववराः ब्रह्मादयः अमरा देवाः एतैरर्चितं सुमनःफलार्हणैः पुष्पफलोपायनैः आत्मनः स्वस्य तमोपहत्यै अज्ञाननिमित्तपापनिरासाय तरुषु जन्म येन तमोनिमित्तपापेन ॥ ५ ॥

यतो यथा देवादयो मनुष्यलिङ्गमवाप्य भगवन्तं सेवन्ते तथा एते भ्रमरा अपि तेष्वेतेषु तत्मात्स्वरूपप्रसेवातत्परतं न हातव्या मुमुक्षुभिरिति भावेनाह—एत इति । अलिनो भ्रमराः "भ्रमरस्य पञ्चमूलमवस्य ह्युर्मेतीषिणः" इति अखिललोकतीर्थं समस्तजनस्य स्नानलक्षणं कीर्तनयोग्यं शुद्धिजननस्थानीयं "यात्वेत्य-स्मसि पावने" इति च अखिलः अनल्पः लोकः प्रकाशः ज्ञानं येषां ते तथा तेषां सेवायोग्यत्वाद्भक्त्यादीनां "लुक् प्रकाशे" इति धातुः अनुपथं "पथ गतौ" इति धातुः अत्र गच्छति त्वं तत्रानुगमनलक्षणसेवां कुर्वन्तीत्यर्थः । अनुपदं वा मुनिगणाः सर्वज्ञानां देवादीनां गणाः "वसु वेदस्य सर्वस्य मुनिः सर्वज्ञ-रुदाहृतः" इत्युपमाला त्वदीयेषु वैष्णवेषु मुख्या गूढं मनुष्यलिङ्गधरं न जहाति त्यजन्ति "ओहाक् त्यागे" इति धातुः जहातीति पाठे वा "व्यत्ययो बहुलम्" (३।१।८५) इति सूत्रात्सर्वः अमराणामात्मदैवं कुर्वन्तं अनघात्मदैवमिति पाठे अनघानां निर्दुःखानां मुक्तानाम् आत्मदैवम् "मुक्तानां परमा गतिः" "दुःखे-नोऽपसेत्यघम्" इत्यमरः अनघेति पृथक् पदं वा ॥ ६ ॥

पूर्वोक्तमतिविशदति—नृत्यन्तीति । शिखिनो मयूराः अन्यत्र केश-शिखाधारिणः तापसाः हरिण्यः मृगस्त्रियः अन्यत्र हिरण्मय-वस्तुपस्तेजसा ज्वलन्ति यासां सारोऽस्तीति हरिण्यः परोक्ष-देवसम्बन्धेन हरिभक्तजनतापहारिणय इत्युच्यन्ते "महेन्द्राज्ञानमालिन्यं भोक्तुमिच्छेज्जनार्दनात्" इति स्मृतेः "हरिणी सा हिरण्मयी" इत्यभिधानं ते तवेक्षणेन प्रियं कुर्वन्ति कोकिलगणाश्च सूक्तैः कर्णरम्यैः वचनैः प्रियं कुर्वन्तीति अन्यत्र कः ब्रह्मा उः शिवः तयोः किल वार्तां कीर्तने सम्भावना च येषां ते कोकिलाः इन्द्रादयः परभृतः इतरप्राणिरक्षार्थं प्राणधारिणः न स्वार्थं परमभागवता इत्यर्थः । स्वालयाय गृहमिति गृहमागतायातिथये गृहिणाऽर्घ्यपाद्यादिकं दातव्यमिति यत्तस्मात् वनौकसो मृगादयो वा वानप्रस्थादयो वा धन्याः कृतार्थाः स्वं स्वं निवा-समागतं त्वां समाजयन्ति, अयं सतां आतिथ्यमाव इत्याह—सतां निसर्गः नितरां स्वभावः इयान् एतावान् हि यस्मात्तस्मा-दिदमुचितमिति भावः । "वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान् तस्यैतां शान्तिं कुर्वन्ति हर वैवस्वतोदकम् आशां प्रतीक्षे सङ्गतं सूनृतां चेष्टापूर्ते पुत्रपशूंश्च सर्वान् एतद्वृङ्क्ते पुरुषस्याल्पमेधसो यस्यानश्नन्वसति ब्राह्मणो गृहे" इति "वार्ता सम्भावना किल" इति यादवः ईड्य ! सर्वकर ! ॥ ७—८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अहो इति ॥ ५ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

यतस्त्वया यथा कथञ्चित् सर्वे एव तत्तत्प्रकारेण प्रीणिताः आवेशिनः सर्वभावेन निरूपणे आवेशाधिकरणभूतः सम्यक् भावयति ततः शीघ्रमेवाविष्टा सा देवता भवति अन्यथाभये-षामप्यनिष्टं स्यात् वृन्दावनस्थानां सङ्कर्षणस्य च भजने अभ-जनेऽपि देवतान्तरभजनेन तेषां नाशः भगवद्भोग्यानां स्वीकारेणोतरस्य च अभजने तु सर्वदेवाभजने अतिक्रमः स्यात् अन्यस्य च क्रोधः अतो नित्यस्वावेशसिद्ध्यर्थं बलभद्र-स्य प्रबोधनम् ॥ ८ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

स्वीयपुष्पफलादिभिः स्वप्रभोः श्रीकृष्णस्य चरणावर्चयाम इति मनोऽनुज्ञाप्य युष्माकमहं जानामीति स्वविज्ञत्वं परमभक्तान् श्रीवृन्दावनीयवृक्षान् कटाक्षेण ज्ञापयन्नग्रजमाह—अहो इति । वि-टपाः स्वस्वशिरोभिरुपायनं तत्तदुपाय पदाम्बुजं नमन्तीति भक्त्या शिरोभिरेव चरणयोस्तत्स्पर्शयन्तीत्यर्थः । किमर्थम् आत्मन-स्तमसोऽपराधस्याऽपहत्यै येनापराधेन कृतमुत्पादितं तरुजन्म-त्वमस्माभिरपराध एव कश्चित्कृतः यत्कृष्णसान्निध्यगमनासमर्थम-स्माकं तरुजन्म विधात्रा कृतमिति तेषामनुरागोत्थं वचनमेवा-न्वोचङ्गवान् वस्तुतस्तु ब्रह्मादिभिरपि प्रार्थ्यमानत्वाद्वृन्दा-वनीयतरुजन्म नापराधफलमिति ज्ञेयम् ॥ ५ ॥

तत्रत्यान् जङ्गमान् स्तौति—द्वाभ्याम् एतेऽलिनो भ्रमराः अनु-पथं त्वदङ्गसौरभानुसारित्वात् वने क्वचिद्रहस्यलीलार्थं गूढं सहचराद्यगम्यमपि त्वां न जहति न त्यजन्ति हे अनघेति तत्र गमनेच्छेषां त्वद्यं त्वं न गृह्णासि तस्मादेते भवदीयमुख्या एव मुनिगणा रहस्यलीलासमनक्षीणा भ्रमरीभवन्ति तेन भो भ्रमराः ! मद्रहस्यकुञ्जमपि प्रविश्याऽस्मत्सौरभ्यमास्वादयत मा सङ्कुचते-तितान् प्रति प्रसादो व्यञ्जितः ॥ ६ ॥

ते गृहमागताय त्वां अहमागते सम्मानयितुं सकैः प्रियं कुर्वन्तीति पूर्वेणान्वयः । स्यात् सतां निसर्ग इति नृत्यसहर्षा-वलोकनप्रियवचनैर्गृहागतस्य साधोः सम्मानमिति सतां स्वाभा-विको धर्म इत्यर्थः ॥ ७ ॥

एवं तत्तत्कर्तृकसेवया तान् स्तुत्वा श्रीरामकर्तृकप्र-शंसनापि तानेवानुरक्तैरन्यैश्च सहितान् स्तौति—धन्येयं धरणी अद्येत्यत्र तारगतस्थूलकाव्यमालस्यपोकिवाचकेन पदेन त्वत्स्वरूप-चरणदेवस्पर्शादपि त्वत्स्पर्शोऽस्या अतिसुखद इति द्योतितम् कुतो धन्येयमिति चेत् धरणीस्थानां तृणादीनामपि त्वत्सम्प-र्कादेवेत्याह—तृणानि च वीरुधश्च तास्त्वत्पादाभ्यां स्पृक् स्पर्शो यासां तथाभूता यतः द्रुमाश्च लताश्च करजैः पुष्पत्रोटनार्थं नखैर-भिमृष्टाः स्पृष्टाः यतः नद्यादयश्च सकृपावलोकैः । यद्वा, सत् अयः शुभावहो विधिर्भक्तस्तथाभूतैरवलोकैः सहिता यतः किञ्चित् मृगनयनीतुल्यां गोपीपङ्क्तिषां चारितां लक्ष्मीं वक्षसि कौतुकेन ध्रियमाणां विलोकयाह, गोप्यः श्यामवक्षसोऽपि भुजयोरन्तरं वक्षस्तेन सहिता यतः श्रीर्यामापि यस्मै स्पृहयति सा या लक्ष्मी श्यामामपि शोभयतीत्यत एव वक्षसि स्थिता धृता इति भावः पक्षे गोप्यो भजसुन्दर्यः यत्स्पृहा यस्मै भुजान्तराय लक्ष्मीरपि स्पृहयति तथा हि भागवतामृतीयाः कारिकाः—

"सदा वक्षःस्थलस्थापि वैकुण्ठेशितुरिन्दिरा ।
कृष्णोरःस्पृहयाऽस्यैव रूपं विवृणुते ऽधिकम् ॥
पौराणिकमुपाख्यानमत्र संक्षिप्य लिख्यते
श्रीः प्रेक्ष्य कृष्णसौन्दर्यं तत्र लुब्धा ततस्तपः ।
कुर्वन्ती प्राह तां कृष्णः किन्ते तपसि कारणम् ॥
विजिहीर्षे त्वया गोष्ठे गोपीरूपेति साऽब्रवीत् ।
तद्दुर्लभमिति प्रोक्ता लक्ष्मीस्तं पुनरब्रवीत् ॥
स्वर्णरेखेव ते नाथ ! वस्तुमिच्छामि वक्षसि ।
एवमस्त्विति सा तस्य तद्रूपा वक्षसि स्थिता" ॥

इति ॥ ८ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अहो इत्यतिकौतुके अव्ययम् हे देववर ! यत् येन त्वया स्वचरणसंस्पर्शयोग्यम् ब्रह्मादिभिरपि वाञ्छितं तरुजन्म कृतम् तस्य ते पादाम्बुजं सुमनःफलार्हणामुपादाय नमन्ति । ननु, ब्रह्मा-दिभिः प्रार्थितं वृन्दावने तरुजन्म प्राप्य पुनः किं वाञ्छन्त्यत आह—तमोऽपहत्यै इति । तमः पुनर्भवलक्षणः संसारो निरन्तर-भवत्पादपद्मसन्निकर्षप्रतिबन्धकस्तन्निवृत्तये इत्यर्थः ॥ ५ ॥

हे आदिपुरुष ! प्रायः अमी भवदीयेषु भागवतेषु मुख्याः एव अलिनः भृङ्गात्मना स्थिताः यत एते वने गूढमपि आत्मदैवं त्वां न जहति न त्यजन्ति अपि तु । हे अनघ ! अखिललोकतीर्थं तव यशोऽनुपदं गायन्तो भजन्ते त्वां भजन्तीत्यर्थः ॥ ६ ॥

हिंहतो यतः सताम् इयान् निसर्गः साधुमार्गस्थः स्वभावः अतः केचित्सन्त एव मयूरादिरूपेणेह वसन्तीति भावः ॥ ७ ॥

अद्य इदं त्वयाक्रम्यमाणा धरणी धन्या त्वत्पादौ स्पृशन्तीति त्वत्पादस्पृक्तृणवीरुधश्च धन्याः करजैर्नखैरभिमृष्टाः स्पृष्टाः द्रुमलताश्च धन्याः त्वदीये सदयावलोकैर्नद्यादयश्च धन्याः श्रीरपि यत्स्पृहा यत्र स्पृहावती भवति तेन भुजयोरन्तरेण वक्षसा गोप्यो धन्याः ॥ ८ ॥

### भाषा टीका ।

॥ श्रीभगवानुवाच ॥

श्रीभगवान् बोले, कि—हे श्रीबलदेवजी, हे देवतान में श्रेष्ठ ! देवन सों पूजित ऐसे आपके चरणारविन्द को ये सब व्रज के वृक्ष फूल फल पूजा लेके अपने मस्तक सों प्रणाम करे हैं, काहे सों, कि—जासों ये तरु जन्म भयो है वा अज्ञान के दूर करवे कूं । अथवा और न के तम दूर करवे कूं इन मुमुक्षुन ने तरु जन्म धारयो है, या प्रकरण-में आप श्रीकृष्ण जो कछु बलदेवजी के तांई कहैं है सो आपही ( कृष्ण ) को समुझनों चाहिये । आपाँव ये वृक्ष मेरे चरणों कूं नमैं है इत्यादि ॥ ५ ॥

हे आदिपुरुष ! और ये भ्रमर अखिल लोक के पवित्र करनवारो जो आपको निर्मल यश है ताको क्षण २ में

॥ श्रीशुक उवाच ॥

एवं वृन्दावनं श्रीमत्कृष्णः प्रीतमनाः पशून् ।
रेमे सञ्चारयन्नद्रेः सरिद्रोधस्सु सानुगः ॥ ९ ॥
कचिद्गायति गायत्सु मदान्धालिष्वनुव्रतैः ।
उपगीयमानचरितः स्रग्वी सङ्कर्षणान्वितः ॥ १० ॥
(१) कचिच्च कलहंसानामनुकूजति कूजितम् ।
अभिनृत्यति नृत्यन्तं बर्हिणं हासयन् कचित् ॥ ११ ॥
मेघगम्भीरया वाचा नामभिर्दूरगान् पशून् ।
कचिदाह्वयति प्रीत्या गोगोपालमनोज्ञया ॥ १२ ॥

भाषा टीका ।

गावैं है। भाव करकैं तो ये सब मुनिगण हैं आपके वासन में कोई मुख्य हैं, ताहि सों वन में गुप्त होयके पै हु अपनो जो दोष रहित स्वामी है ताको नाहीं छोड़े हैं ॥ ६ ॥

हे स्तुति करवे योग्य! ये वृन्दावन के मोर आनन्द तें आपके आगे नृत्य करें हैं, और ये हरिणी गोपीन की नांई चितवन सों तुमपै प्यार करें हैं, और वन में रहवे वारे ये वृन्दावन के कोकिलनके समूह आपको अपने घर आये जानिके सुन्दर मधुर बोलनि सों सत्कार करें हैं, ये वृन्दावन वासी पशुपक्षी भी धन्य हैं, इतनोई तो साधुजनन को स्वभाव है, कि–जो बड़े पुरुष अपने घर आवें तो उनकों कछू यथा शक्ति सत्कार करनो ॥ ७ ॥

अब तो ये पृथिवी बड़ी धन्य हैं, जो आपके चरणकमल को स्पर्श करे है, ऐसेंई तृण छोटे२ बेल बूटी भी आपके चरणन के स्पर्श सों धन्य हैं, और ये लता वृक्ष भी धन्य है जिनको आप हाथनसों नखन सों स्पर्श करो हौ, नदी पर्वत पशु पक्षी भी बड़े धन्य हैं, जिनको आप दया पूर्वक देखो हौ, और गोपी भी धन्य हैं कि, जिनको आप वक्षःस्थल सों आलिङ्गन करो हौ, जा वक्षःस्थल की चाहना लक्ष्मीजी को रही है ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं श्रीमद्वृन्दावनं प्रति प्रीतः सन्नद्रेः समीपवर्तिसरित्तटेषु पशून् सञ्चारयन् सानुगो गोपैः सह वर्तमानः प्रीतमना रेमे ॥ ९ ॥

तामेव रतिमाह–कचिदित्यादिचतुर्भिः ॥ १० ॥

बर्हिणं नृत्यन्तमनु अभिनृत्यति बर्हिणमभिमुखो नृत्यतीति वा सखीन् हासयन् ॥ ११—१२ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवं सनमवर्णनादिप्रकारेण वृन्दावनं व्याप्य प्रीतः सन् "काकाव्यभावदेशानाम्" इत्यादिना कर्मत्वम् अद्रेः श्रीगोवर्धनस्य प्रीतत्वप्रीतमनस्त्वयोः सामान्यविशेषाभ्यां भेदः ॥ ९ ॥

प्रीतमनसो रतिं दर्शयन् वर्त्तमानप्रयोगेण साधारणादितनामेवाह—कचिदित्यादिना । पूर्वं "कचिद्वेणुं वादयन्तः" इत्यादिना बालकानामेव प्राधान्येन तत्तत्क्रीडोक्ता, इदानीं तु प्रीतमनस्त्वेन साक्षात् श्रीकृष्णस्यैवेति विशेषः, कचित् कस्मिंश्चित् (पथि सङ्कर्षणान्वित इति वा पाठः) पथि स्रग्वीति पाठे कस्मिंश्चित् प्रदेशे कदाचिदिति वा एवमग्रेऽपि मदेन श्रीवृन्दावनपुष्परसपानजेन श्रीभगवत्सान्निध्यसौभाग्यजेन वा अन्धेषु मधुमत्तेषु तदन्योऽध्यलिष्वपि गानमाधुर्यमभिप्रेतं सङ्कर्षणादयः श्रीभगवता सह तस्यापृथक्तया गानाभिप्रायेण अनुव्रतैः तदेकप्रीतिपरैर्गोपैः अत्र भ्रमराणां स्वजातीयस्य स्वरमात्रस्य गानं श्रीभगवतस्तदनुसारिस्वरस्य तदुचितरागस्य च अनुव्रतानां तु तयोर्गीतवस्तुतच्चरितस्य चेति मिथोगानमेलनं ज्ञेयम् ॥ १० ॥

कलवाक्यैरिति शुकाद्यनुरूपमजल्पन्तं बोधयति, एवं बालिश्वपि च चकारो बालिकावति समुच्चिनोति अर्थस्तथैव बर्हिणम् अभिमुखीकृत्य नृत्यति तदभिमुखः सन् नृत्यतीत्यर्थः । तेषां व्याख्याने वस्तुतोऽप्यनुकर्षणीयः तज्जातिनृत्येनैव तन्निर्जयात् सखीन् हासयन् ॥ ११ ॥

पशूनिति श्लेषेण श्रीकृष्णपार्श्वतो दूरं गत्वा निर्बुद्धित्वमुक्तं येन पूर्वमङ्गस्पर्शादेव तत्स्फुरणात् दूरगमनज्ञानमपि न जातमिति भावः । मेघेति तद्गर्जितं लक्ष्यते तद्वद्गम्भीरयेति महापुरुषलक्षणमुक्तम् एव ॥ १२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेव प्रपञ्चयति–कचिदित्यादिना । श्लोकमेतत्: प्राकृतेन । मदेन मधुपानमदेनान्धेषु भृङ्गेषु गायत्सु सत्सु स्वयं सखीन् हासयन् कचिदनुगायति अनुगैः उद्गीयमानं चरितं यस्य सखिभिःसङ्कर्षणेनान्वितो रेमे कचित् कलहंसानां कूजितमनुकृत्य कूजति चुकूज

(१) अनुजल्पति जल्पन्तं कलवाक्यैः शुकं कचित् । कचित्सवल्गु कूजन्तमनुकूजति कोकिलम् ॥ कचिदयमधिकः पठ्यते ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तथा नृत्यन्तं बर्हिणमभिनृत्यति अनु अभिनयं करोतीत्यर्थः । कश्चिन्मेघस्येव गम्भीरया वाचा सङ्केतितनामभिः सखीन् हासयन् दूरगान् पशूनाह्वयति आजुहाव यथा गवां गोपानां च मनो-ग्रया प्रीत्या तयोपवर्णितो वा ॥ १०-१२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कृष्ण एवंविधमाहात्म्यं वृन्दावनमवाप्य रेमे इत्यन्वयः अद्रेः पादेषु सरितो नद्यः रोधःसु तीरेषु पशून् सञ्चारयन् ॥ ९ ॥

रतिप्रकारं दर्शयति-क्वचिदिति । अनुव्रतैरनुचरैः सखिभिः सङ्कर्षणेन चान्वितः अनुगतः ॥ १० ॥

हासयन् हासं जनयन् ॥ ११ ॥

नामभिः प्रसुतिवारप्रयुक्तादिवर्णैः गवां गोपालानां मनोऽन्तःकरणं आपयन्त्या बोधयन्त्या मनोरमया वा ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एवं सनमेवर्णनादिप्रकारेण वृन्दावनं अवाप्य प्रीतः सन् ॥ ९ ॥ १० ॥

एवं प्रथमसेवारम्भादिप्रसङ्गे साधारण्येन वर्णनान्तरं लीला-माह-क्वचिदित्यादिना । बर्हिणमभिलक्षीकृत्य नृत्यति पशूनां दूरगानां-पश्चादेव श्रीकृष्णागमनस्फूर्तेः सखीनां मध्ये यो व्याप्तसिद्धयोः प्रीतः तदनुकारित्वम् तेषामपि स्वयमेव नर्ता-नुकार्यमिति भावः ॥ ११-१४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं वृन्दावनस्वरूपं निरूप्य तत्रत्यानां च स्वरूपमर्थाद्वल-भद्रबोधनं च कृत्वा तादृशे वृन्दावने भगवान् क्रीडां कृतवा-नित्याह-एवमिति दशभिः । पौगण्डवयसः पुरुषार्थचतुष्टयसाधकालरूपत्वादादौ पुरुषार्थचतुष्टयप्रतिपादनं क्रमेण ततो दश-रसोद्भावनेन क्रीडापरमानन्दस्य द्वाभ्यां रसौ लौकिकत्वं भूयत इति ब्रह्मानन्दापेक्षया भजनानन्दस्योत्तमत्वप्रतिपादनार्थं तत्र प्रथमं धर्ममाविष्कुर्वन् रतिं कृतवानित्याह-एवंरूपे वृन्दावने कृष्णः पशून् सञ्चारयन् रेमे इति सम्बन्धः, वृन्दावनगुणनिरूपणार्थ-मेव वचनानामुपयोगादेवमिति नैव सम्बध्यते अतो निरूप्यो-परमेत्यादि क्रिया नाध्याहर्तव्या श्रान्तौ च सङ्गतिरेवमित्यनेन योजनीया यत्र स्वतु मनो दध्रे यत्र च उवाच तत्र रेमे अन्यानि च कृतवानिति महावाक्ये सर्वेषां सम्बन्धः, यदा पुनस्तत्तदभिमानिदेवताभिः सह रतिं कर्तुमारम्भं कृतवांस्तदा लक्ष्मीः स्वत एव समागता अतो रमणमनुकालिकमेवेति अनु-भावा उद्दीपनविभावाः व्यभिचारिणश्च निरूप्यन्ते आलम्बनं तु लक्ष्मीरेव नायकोत्कर्षमाह-कृष्ण इति । सदानन्दो हि पुरुषो-त्तमः अनश्च करणं तस्यापि दोषनिवृत्तिपूर्वकं गुणा वक्तव्याः तदाह-प्रीतमना इति प्रीतं निर्दुष्टं सन्तुष्टं मनो यस्य पशून् सञ्चारयन् इति धर्मः, सम्यक्चारणं देशविशेषे गहराद्विपिने भक्ष्ये स्वरमणं प्राप्नोतीति रमणोपयोगार्थं देशविशेषान्-

निर्दिशति अद्रेः सरिद्रोधःसुरिति पर्वतसम्बन्धिन्यो याः नद्यः सरितस्तासां रोधःसु कूलेषु तत्र हि हरिततृणानि भवन्ति प्ररू-ढानि च पर्वते स्थित्वा वा अधस्तात् स्थित्वा वा तासामन्यत्र गमनशङ्काभावाच्चारयतैव रमणं सम्भवति अत एव सम्यक् चारणं धर्मस्तो रक्षार्थं स्वामिनिवेशे धर्मरमणशोभिनता स्या-दिति तद्व्यावृत्त्यर्थमाह-सानुग इति । अनुपश्चाद्गच्छन्तीत्यनुगाः सेवकाः तैः सहितः ॥ ९ ॥

एवं धर्मोद्भावनेन क्रीडामुक्त्वा अर्थोद्भावनेनापि क्रीडामाह, क्वचिदिति । मदान्धालिषु गायत्सु क्वचिद्भगवानपि गायति अनु-व्रतैः निजभक्तैरुपगीयमानचरितश्च सखिसङ्कर्षणाभ्यां चा-न्वितः "यदा खलु वै पुरुषः श्रियमश्नुते वीणाऽस्मै वाद्यते" इति श्रुतेः । वीणाऽनुकरणस्थानीया भ्रमरा भवन्ति अर्थभोगेनैव गीतमपि गायति अन्यथा तद्रसोद्रेको न ज्ञापितः स्यात् सर्व-तश्च स एव स्तूयमानोऽपि भवति परिकरयुक्तश्च परिकरो द्विविध इति सखिसङ्कर्षणौ निरूपितौ स्वसम्बन्धिनः कुलसम्बन्धिन-श्चेति बन्धुभिर्वा न भुज्यत इत्यर्थं तेषां सहभाव आवश्यकः समीपे गानं स्तोत्रं चार्थभोग एव मुनीनां भ्रमरत्वनिरूपणात् समीपे धाष्टर्यादानं न भविष्यतीति मदान्धा निरूपिताः मदोऽत्र भगवत्सान्निध्यानन्दः अलिपदे भ्रमरो वा वृन्दावने पुष्पेषु मकरन्दश्च रसास्वादितेषु भक्तिरूप एवेति अनुव्रतं भेषामिति तेषामपि स्वसाम्यकरणं सर्वं सखायः सङ्कर्षणश्च सत्यगन्धवः, तेषामर्थभोगः सम्यक् सम्पादित इति एवं वृन्दावने श्रीमान् कृष्णः प्रीतमना इति पञ्च पदानि सर्वत्रानुवर्तन्ते ॥ १० ॥

एवमर्थलीलामुक्त्वा कामलीलामाह-क्वचिदिति । कलहंसानां कूजितमनुकूजति कामे हि इयं कलैव कूजितं रसोद्गमनार्थं तथाश्च रसार्थं तत्र मयूरस्य मयूर्या सह सम्बन्धस्यैव मत्तस्य गात्र-विक्षेपे सर्वगतो रसः एकीभूय नेत्राभ्यां निर्गतो मयूरी मुखे प्रविशत्यूर्ध्वचरो (रेतो) निर्गच्छति आश्चर्यं च अन्ये सर्वे कामे प्राकृता एव रसाः अत एव निचितं तत्र कार्यमुत्पद्यते अतो मनःपूर्वक इति रसास्वादकस्य हंसस्य मानसैकशर-णस्य तादृशं भवति कूजितम् अत एव सर्वविलक्ष-णत्वं हंसे वक्तुं कलहंस उक्तः, स हि कलानां हंसः बहुनामे कविप्रतिपादकत्वे तदर्थमित्थं तत्त्वं भवति भगवांस्तु सर्वेषा-मेव कूजितं रसावान्तरभेदाभिप्रायमनुकूजति अभितो नृत्यन्तं बर्हिणं नृत्यति यदि मयूरो मयूर्या सह रसेन नृत्यति अन्यथा मेघादिदर्शनेन स्वभावतो वा यदि नृत्यति तदापि भगवान् नृत्यति रसाभासभावाभासनिरूपणार्थम्, अन्यथा रसः पुष्टो न भवेत् तदाह-हासयन् क्वचिदिति । बालान् बर्हिणं हासयन् नृत्यति बाला बर्हिणं हसन्ति नायं सम्यक् नृत्यतीति सर्वत्रैव-मिति निषेधार्थमाह—पुनः क्वचिदिति ॥ ११ ॥

मोक्षलीलामाह-मेघगम्भीरयेति वाचा दूरगान् पशून् नाम-भिर्भगवान् क्वचिदाह्वयतीति सम्बन्धः । भगवत्सायुज्यं मुक्तिश्च भगवद्दत्तैव भवति सर्वशास्त्रनिरूपितानां साधनानां भगवति-तत्तद्धर्मसम्बन्धजनकानां ततः प्रतिफलितानां भगवत्कृतानामेव साधकत्वमिति सिद्धान्तः—

"यदनुस्मर्यते काले स्वबुद्ध्या भद्ररन्धन ! ।
येनोपशान्तिर्भूतानाम्" ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

आर्यमग्रजम्, विश्रमयति विगतश्रमं करोति ॥ १४ ॥
मिथो नृत्यादीन् कुर्वतो गोपान् प्रशशंसतुः ॥ १५—१६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

क्वचिदित्यनुवर्तत एव चकोरश्चन्द्रिकापायी क्रौञ्चः क्रौञ्चाख्यः पक्षी चक्राह्वश्चक्रवाकः भरद्वाज एव भारद्वाजः स्वार्थेऽण् व्याघ्रचाटाख्यः पक्षी चकोरादीनां कश्चित् कश्चिदनुकृत्य रौति सर्वानेव युगपदनुकृत्य रौति सर्वशक्तिमत्त्वात् इत्यैश्वर्यं तत्रापि पूर्ववद्रोऽयं भीतवदिति क्रीडाकौतुकेन वतिप्रत्ययस्तयोर्हिंस्रत्वाभावेनापि वस्तुतस्ताभ्यां भयाभावात् स्मेति प्रसिद्धमेवेदं नात्र संशयः कार्य इत्यर्थः । अत्र तेषामुत्तरपक्षे व्याघ्रादिवद्धातिशयानां सम्बन्धे भीतायत इत्यर्थः । यद्वा, सत्त्वानां मध्ये यो व्याघ्रसिंहयोः सम्बन्धे भीतः तद्वदनुरौति, तेषामीषद्भयदर्शनकौतुकार्थमिति भावः ॥ १३ ॥

आदिशब्दाद्वीजनादीनि ॥ १४ ॥

नृत्यत इति क्वापि प्रशशंसतुः वल्गत उत्प्लुत्योत्प्लुत्य गतिविशेषं कुर्वतः मिथोऽन्योन्यमासक्त्यर्थः । अन्यत्तैः । यद्वा, तौ क्वापि नृत्यतः क्वापि गायत इत्येवं क्वापीति सर्वत्रापि योज्यं किञ्च क्वापि मिथो गृहीतहस्तौ क्वापि हसन्तौ भवतः । यद्वा, पदत्रयमिदं विशेषणत्वेन सर्वत्रैव योज्यं क्वापि गोपालान् हसन्तौ अहो इमे गानेन गन्धर्वगणातिरस्कारिणो नृत्येन विद्याधरगणविडम्बका युद्धेन त्रिलोकीजित्वरा इत्यादिपरिहासं कुर्वन्तौ प्रशशंसतुरेव तत्त्वतो माहात्म्यविशेषख्यापनात् ॥ १५ ॥

उपसंहरिष्यन् विश्रामक्रीडां वदन् गोपानां सौभाग्यभरं दर्शयति, क्वचिदिति त्रिभिः । पल्लवेत्युपलक्षणं कोमलनवदलकोरकपुष्पाणां तल्पेषु बहुत्वं पृथक् पृथक् पञ्चषैर्मिलित्वा निर्मितत्वेन बाहुल्यात् मतश्च बहुतरेष्वपि तेषु तेषां प्रीत्यै तत्तद्वाञ्छितस्तत्प्रेमोद्बोधितेन निजशक्तिविशेषेण बहुरूपतयैव शेत इति विज्ञापयति—एवम् ईशचेष्टित इति वक्ष्यमाणमैश्वर्यमत्रापि सङ्गतं स्यात् । नियुद्धं तैरेव सह बाहुयुद्धं तेन श्रमः श्रीगण्डादिविषयकमौक्तिकस्वेदप्रस्वेदकणिकोदयादिकरः तेन कर्षितो दुर्बल इव अनेन सखीनामपि तादृशं पदत्वं सूचितम्, तथा चागमे "गोपैः समानगुणशीलवयोविलासवेशैः" इति तदेवमपि तेषां स्वयमनुस्मरणादौ यत्प्रयुक्तित्वमेवं बद्ध्यामः सर्वस्य व्रजस्य तेनापि गुणेन श्रीकृष्णैकसुखतात्पर्यलीलाशक्तिरेव तेषामुपमं स्तमयतीति गोपेति ते किञ्चिज्ज्येष्ठा ज्ञेयाः तत्रोपबर्हणत्वं च तत्सुखलाभायैव तेन तत्कृतं किं वा हान्तिसर्यापि तेनैव तदर्थं त्यागो ज्ञेयः ॥ १६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

उपबर्हणम् उपधानम् । आर्यम् बलभद्रम् संवाहनं क्षालनम् ॥ १४-१८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

क्वचिच्चकोरादीननुसृत्य रौति रुराव सत्त्वानां मृगाणां मध्ये व्याघ्रसिंहयोस्ताभ्यां भीतवद्भवति ॥ १३ ॥

क्वचिद्गोपस्योत्सङ्गोऽङ्क एवोपबर्हणमुपधानं यस्य तं क्रीडापरिश्रान्तमार्यमग्रजं स्वयं पादपीडनादिभिर्विश्रमयति ॥ १४ ॥

वल्गत उत्प्लवतः नृत्यादीन् कुर्वतो गोपान् गृहीतौ हस्तौ याभ्यां तथाभूतौ प्रशशंसतुः ॥ १५ ॥

क्वचिन्नियुद्धेन बाहुयुद्धेन यः श्रमस्तेन कर्शितः ग्लानः वृक्षमूलाश्रयः पल्लवतल्पेषु गोपानां उत्सङ्गमुपधानं यस्य तथाभूतः शेते शिश्ये ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

व्याघ्रशार्दूलसिंहयोः सकाशात् भीतवत् स्वयमपि भीतो भवति ॥ १३ ॥

गोपस्य उत्सङ्गोऽङ्क एव उपबर्हणं शिरःपीठं यस्य स तथा तम् आर्यं ज्येष्ठं पादसंवाहनादिभिः विश्रामयति, क्रीडाप्रासक्लमं नाशयति ॥ १४ ॥

रामकृष्णौ नर्तनादिकुर्वाणान् गोपालान् नृत्यादिविशेषविषयेषु प्रशशंसतुः स्खलनादिविषये हसन्तौ वल्गत उत्प्लवतः ॥ १५ ॥

नियुद्धं बाहुवल्लीमहणाविक्रमयुद्धम् ॥ १६—१७ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तल्पेष्विति बहुत्वं तत्र तत्रानेकेन प्रकारेणेति द्योतकं महात्मनः महात्मानः परमभागवताः "सुप्तो सुप्तो भवन्ति" इत्युपसङ्ख्यानेन ॥ १५ ॥ १६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं पुरुषार्थचतुष्टयलीलामुपपाद्य दशरसप्रकारेण भगवतो लीलां वदन् प्रथमं षड्रसलीलामाह—चकोरेति । चकोरा हि चन्द्रकिरणभोक्तारोऽलौकिकभोगाः न ह्यन्येन चन्द्रकिरणा भूमौ स्थिता भोक्तुं शक्यन्तेऽत एव परं भोक्तारः सूर्यकिरणा इव अन्यथा ततः शैत्यादिकं न स्यात् तथैव सर्वे पुरुषाः स्त्रीभिर्भुज्यन्ते तद्रसं चानुभवन्ति तथैव लोकप्रतीतिः तद्रूपं भगवान् रसानुभवं करोतीति ज्ञापयितुं शृङ्गाररसे चकोरवद्भगवतो वाग्व्यापारो निरूप्यते क्रौञ्चो वीरे, चक्रवाकः करुणायां, स हि वियुक्तश्चक्रपदे भावसंतेन भावलाभभिप्रेतमिति तेन आह्वा आह्वानं यस्येति तस्याऽऽह्वयं करुणा युक्तेव भारद्वाजोऽद्भुते क्रमस्य नियामकत्वात् भारद्वाज इत्याख्या यस्य स हि द्विजन्मा तदामसत्खरसख्यापनमद्भुतरसेऽनुगुणां भवति बर्हि हास्ये तस्य तथात्वं पूर्वमेव निरूपितं एते षड्विधा नात्यन्तं विरुद्धा इत्येकीकृत्य निरूपिताः भयानकरसस्तु सर्वोपमर्दक इति पृथक् निरूपयति,

पादसम्वाहनं चक्रुः केचित्तस्य महात्मनः ।
अपरे हतपाप्मानो व्यजनैः समवीजयन् ॥ १७ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सत्त्वानां मध्ये व्याघ्रसिंहयोर्भीतवदनुकरोतीति एवं रसाविर्भावे प्रमाणं प्रसिद्धमिति रमेत्याह, भयं द्विविधं स्वरूपनाशात् अभिमानादिधर्मनाशाच्च तत्र स्वरूपे व्याघ्रः अभिमानादिधर्मे सिंहः बहुप्रकारं च भयं प्रतीकारासमर्थानां सम्भावनायामन्यथा अन्येषां चान्यथेति तत्र सत्त्वानि मृगादीनि प्रतीकारसम्भावना-रहितानि भये परमा काष्ठा सत्त्वसम्बन्धिन्यवस्था रसाभिनये वेदापेक्षया वचनमतिसुन्दरमिति तदेव निरूपितम् ॥ १३ ॥

बीभत्सरसलीलामाह—क्वचित्क्रीडापरिश्रान्तमिति । मार्गे बल-भद्रं स्वयं क्वचिद्विश्रमयति विगतश्रमयुक्तं करोति पाद-सम्वाहनादिभिः पादे हि चलतः श्रमो भवति अङ्गमर्दनं च तदुपकरणं च वस्त्रान्तरव्यावृत्तिकं चाविद्धम्नेतोक्तमेव हीना-ङ्गीनमाव उत्तमस्य बीभत्सो भवति भक्तिमतामेव स बीभत्स-इति प्रतीतिः प्रसन्नानुचितप्रतीतिरेव भवतीति यथा दिव(क्य)पुत्रगत-मपि कष्टमत्यन्तमपीति न पिशाचानां तादृशत्वेन बीभत्सरस उक्तेति किन्त्वकस्मादीनामेव तथेदमपि भक्तानाम् एते हि सर्वे रसा भगवद्भजने तत्तदधिकारनिरूपकाः सर्वरसाविष्टा अपि भगवति सायुज्यं प्राप्नुवन्तीति पादसम्वाहनादिकरणे हेतुः क्रीडापरिश्रान्तमिति क्रीडा मल्लक्रीडा भगवतैव सह बलिष्ठेन सह कृतश्रमो बलाधिक्यजनको भवति परं प्रथमं पीडां प्राप्नोति तत्प्रतीकारं नान्यो जानाति भग-वद्रूपत्वेनैवातिमात्रं व्याप्तत्वात् तदाह—परित: श्रान्तमिति श्रान्ति-विह्वलतासूचनार्थं गोपस्यैव कस्यचिदुत्सङ्गं उपबर्हणं यस्य अत एव विकलत्वात् स्वामिकृतमुपचारमपि सहते आर्तत्वादेव भगवतस्तथा करणम् ॥ १४ ॥

रौद्ररसमाह— नृत्यत इति । मल्लानामिव हि रसो रौद्रः स चाण्डालोऽप्यपि भगवता उपनिबध्यत इति भगवता रसयुक्तलीला कायवाङ्मनोभिर्युक्तमयुक्तं पीडकं च तत्— चतुर्विधा मल्लवीक्षा नृत्यते हरिणा मुदा चाचारया-स्वादश्रोभयोर्द्वयं उभावुभौ मल्लयुद्धे अन्यत्र बहवः तत्र कायिकं नृत्यं गानं वाचिकं वल्गनस्मानसं स्वमौढिरूपा-पकरणात् मिथश्च युद्ध्यत इति पीडारूपा क्रिया कायिकयैव कांश्चि-त्सन्तो कांश्चित्प्रशंसन्तुः गृहीतहस्ताविति न पक्षपातेन फल-विधिकाभिनिवेशः केनचित्कर्तव्य इति ज्ञापनार्थं, साऽपि लीला लोकप्रसिद्धा भुववाधव्यापिका हसन्ताविति प्रथमं सन्तोषः पश्चात् प्रशंसन्तुरिति वा ॥ १५ ॥

शान्तरसलीलामाह—क्वचित्पल्लवतल्पेष्विति । शयानो हि शान्त इव भवति नियुद्धं बाहुयुद्धं तत्र यः श्रमः स कर्षितो येन जित-श्रम इत्यर्थः । शान्तरसः प्रत्येकपर्यवसायीति निरूपयन् भगवान-नेकरूपः सर्वत्र मूलवृक्षेषु सर्वैरेव गोपालैरहमहमिकतयाऽऽहृता बहव एव तल्पास्तेषां सर्वेषामेव युगपत्सौख्यसिद्ध्यर्थं सर्वेष्वेव तल्पेषु भगवान् शयानो जातः तदाह वृक्षमूलम् । ननु, तथापि भगवान् किमिति तत्र शयनं कृतवानित्याह—वृक्षमूला

अथ इति । वृक्षस्य मूलमेवाश्रयत्वेन येषां ते वृक्षमूलाः परमहंसाः नानाभयेन असत्त्वेन तत्रातीन्द्रियत्वेन स्थितान् परमर्षीन् कृता-र्थीकर्तुं तथा करोतीत्यर्थः । लोकानामेव प्रतीतिस्तल्पे शेत इति वक्तुमस्तानि योगिनामन्तःकरणान्यतस्तेषु शेते गोपालानामु-त्सङ्गं एवोपबर्हणं यस्येति नेषु भगवतः प्राधान्यस्थापनम् ऋषि-त्वप्राधान्यस्थापनमिति ज्ञापयति, ते हि वैश्याः अतः स्वधर्म(स्था)-स्थापकमुत्सङ्गरूपम् उपबर्हणं शिरस उपधानम् ॥ १६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

किन्तु सत्त्वानां प्राणिनां मध्ये व्याघ्रसिंहयोः शब्देन भीतवद् भवति सखिषु पलायमानेषु स्वयमपि पलायते वस्तु-तस्तु स्वस्य स्वाभाविकशौर्येण भयाभावो वतिप्रत्ययेनोक्तः ॥ १३ ॥

उपबर्हणं शीर्षोपधानम् ॥ १४ ॥

हसन्तौ कृष्णरामौ नृत्यादीन् कुर्वतो गोपालान् प्रशशं-सतुः ॥ १५—१८

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कश्चिच्चकोरादीन् अनुरौति तदनुकरणशब्दान् करोति कश्चि-च्च सत्त्वानां मृगादीनां मध्ये व्याघ्रसिंहयोस्तादृशभीतवद्भ-वति ॥ १३ ॥

विश्रमयति विगतश्रमं करोति ॥ १४—१६ ॥

भाषाटीका

चकई चकोर चकवा भद्दरिया और मोर इन कीसी बोली बोले हैं, कभऊ व्याघ्र सिंह ते डर के जब और जन्तु भाजे हैं तब आपहू डरप के भाजबे लगें हैं ॥ १३ ॥

काऊ समै जब खेलत २ हार जाव हैं, तब काई गोप की गोदमें अपनो माथो धरकें बलदेवजी पौढें हैं तब स्वयं आप श्रीकृष्ण दाऊके पांव दाबिकें पङ्खा करकें श्रमदूर करें हैं ॥ १४ ॥

कभऊ ग्वाल नाच नाचे हैं गावे हैं कूदें हैं कुस्ती करें हैं तब दोऊ भैया उनके हाथ पकरि कें हँसते २ उन-की प्रशंसा करें हैं ॥ १५ ॥

काहू समै परस्पर ग्वालनसों भयो जो युद्ध वा कुस्ती की थकाई सो काहू वृक्ष की जड को आश्रय लेकें काहू गोपकी गोद को तकिया कर श्रीकृष्ण सोवें हैं ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

व्यजनैः पल्लवादिनिर्मितैः ॥ १७—१८ ॥

राम राम ! महाबाहो ! कृष्ण ! दुष्टनिबर्हण ! ।
इतोऽविदूरे सुमहद्वनं तालालिसङ्कुलम् ॥ २१ ॥
फलानि तत्र भूरीणि पतितानि पतन्ति च ।
सन्ति किन्त्ववरुद्धानि धेनुकेन दुरात्मना ॥ २२ ॥
(१)सोऽतिवीर्योऽसुरो राम ! हे कृष्ण ! खररूपधृक् ।
(२)आत्मतुल्यबलैरन्यैर्ज्ञातिभिर्बहुभिर्वृतः ॥ २३ ॥
तस्मात्कृतनराहाराद्भीतैर्नृभिरमित्रहन् ! ।
न सेव्यते पशुगणैः पक्षिसङ्घैर्विवर्जितम् ॥ २४ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

स्वयोगमायया आवृतात्मैश्वर्यः स्वयं गोपात्मजोऽपि चरितैर्गोपात्मजत्वं भूपालपुत्रत्वं विडम्बयन् तिरस्कुर्वन् सोऽन्यैव क्रीडां कर्तुं न जानातीति भावः । "गोपो गोपालके गोष्ठाध्यक्षे पृथ्वीपतावपि" इति मेदिनी ऐश्वर्यहेतुर्वा रमालालितपादपल्लवोऽपि तदावस्थानि कैश्चिद्ग्राम्यैः बन्धुभिः सह कश्चिद्ग्राम्यो बन्धुरिव रेमे न केवलमावृतमेव तदैश्वर्यमित्याह—प्रच्छन्नमाधुर्याविर्भावे ईशामैश्वर्यमयं चेष्टितं यस्य सः ॥ १९ ॥

ईशचेष्टितत्वमेव दर्शयितुमाह—श्रीदामेति । प्रेम्णोति कृष्णरामावेव स्वव्याजेन तालफलानि भोजयितुमित्यर्थः ॥ २० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

व्यजनैः तालवृन्तादिरूपैः ॥ १७ ॥

स्नेहेन क्लिन्ना आर्द्रीकृता धीर्येषां ते ॥ १८ ॥

निगूढा साधारणैर्जीवैर्दुर्लक्ष्या आत्मगतिर्यस्य सः कृपामात्रापेक्षया तु ईशस्य स्वस्यैव चेष्टितं यस्मिन् सः स्वमायया स्वसङ्कल्पेन गोपात्मजत्वं चरितैस्तदनुरूपैश्चेष्टितैर्विडम्बयन् अनुकुर्वन् रमालालितपादपल्लवोऽपि ग्राम्यैः ग्रामेषूत्पन्नैः स्वकृपापात्रभूतैर्गोपबालकादिभिः समं सह ग्राम्यवत् आसक्त इव रेमे इत्यन्वयः ॥ १९ ॥

श्रीदामा सुबलाद्याश्च वक्ष्यमाणमब्रुवन् सुबलश्च स्तोककृष्णाश्च सुबलस्तोककृष्णौ तावादी येषां ते ॥ २० ॥

---

### भाषा टीका ।

तब वा समैं कितने एक सखा उन महात्मा जी (श्रीकृष्ण) की चरण सेवा करवे लगे हैं। और कितने एक अनघ ग्वाल बाल पतौआन के बीजनान सों श्रीकृष्ण की बियार करैं हैं १७ ॥

हे महाराज ! और कोई चतुर गोप बालक स्नेह सों आर्द्र बुद्धि होय के भगवान् के अनुरूप मधुर सुरीले स्वर सूं गावें हैं जो परमात्मा कूं मनोहर लगें ॥ १८ ॥

या प्रकार अपनी माया सों अपने ईश्वरपने कूं छिपायके अपने मधुर चरितन से गोप बालकपने को अनुकरण करते श्रीलक्ष्मी जिनके कोमल श्रीचरणन को लालन करें ऐसे श्रीकृष्ण भोरे व्रज वासीन के साथ आप उनकी सी नाईं खेलत भये परंच जब तब चेष्टा आपकी ईश्वरपनेई की रहती ॥ १९ ॥

अब वा ईश्वरपने की चेष्टा दिखायबे के नाईं कहे हैं, कि—एक बार राम कृष्ण को प्रेमी सखा श्रीदामा नाम वारो ग्वारिया तैसेई सुबल, स्तोक, कृष्ण, सु आदिलेके और हू सगरे गोप प्रेम सों दोऊ भैयन सैं यों बोलत भये ॥ २० ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तालालिसङ्कुलं तालपङ्क्तिभिर्व्याप्तम् ॥ २१—२२—२३—२४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

हे रामेति रमसे क्रीडसीति तस्मादस्माकैरेतामप्येकां क्रीडां कुरु किं वा रमयसि क्रीडयसि सुखयसि वेति तथास्मान् रमयेति भावः । वीप्सा आदरे प्रोत्साहनार्थम् अत एव त्वामेवादौ सम्बोधयाम इति भावः । हे महासत्त्वेति तव किमप्यशक्यं नास्तीति भावः । हे कृष्णेति परमानन्दमयस्वभावत्वेन सर्वाकर्षकत्वादस्माकमपि सुखं कर्तुमर्हसीति भावः । हे दुष्टनिबर्हणेति वत्सासुरादीनां तस्मात्सावधानत्वेन अतस्तालवनरोधकधेनुकवधार्थमपि तालपातनादिकं युक्तमेवेति भावः । एवं दुष्टनिबर्हणेति श्रीकृष्णस्यैव सार्थकत्वं वदन्तो महासत्त्वेति तद्बलस्य विफलत्वं दर्शयन्तस्तमुत्तेजयन्ति इतः श्रीगोवर्द्धनादित्यर्थः । प्राकृतस्यैव तदा गोचारणात् तथा च श्रीहरिवंशे तत्प्रसङ्ग एव

"आजग्मतुस्तौ सहितौ गोधनैः सह गामिनौ ।
गिरिं गोवर्द्धनं रम्यं वसुदेवसुतावुभौ" ॥

इति । अविदूरे अनतिदूरे श्रीगोवर्द्धनपूर्वतः क्रोशचतुष्टयान्तरे वृत्तेः तथा च वाराहे—

---

(१) सोऽतिसीव इति (२) आत्मसाम्यबलैरिति विज० पा० ।

विद्यन्तेऽभुक्तपूर्वाणि फलानि सुरभीणि च ।
एष वै सुरभिर्गन्धो विषूचीनोऽवगृह्यते ॥ २५ ॥
प्रयच्छ तानि नः कृष्ण ! गन्धलोभितचेतसाम् ।
(१)वाञ्छाऽस्ति महती राम ! गम्यतां यदि रोचते ॥ २६ ॥
एवं सुहृद्वचः श्रुत्वा सुहृत्प्रियचिकीर्षया ।
प्रहस्य जग्मतुर्गोपैर्वृतौ तालवनं प्रभू ॥ २७ ॥
बलः प्रविश्य बाहुभ्यां तालान्सम्परिकम्पयन् ।
फलानि पातयामास मतङ्गज इवौजसा ॥ २८ ॥
फलानां पततां शब्दं निशम्यासुररासभः ।
अभ्यधावत् क्षितितलं सनगं परिकम्पयन् ॥ २९ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं तस्य वीर्यं प्रख्याप्य यदर्थं तदाह—तस्मादिति । कुतः नर एवाहारो येन स हि मनुष्यानेव विशेषतो भक्षयति अत एव तस्मात् भीतैरस्माभिः सेव्यते तद्वनं तस्मादस्माभिरपि न गन्तव्यमित्याशङ्क्याहुः, अमित्रहन् ! इति । हे कृष्ण ! भवान् अमित्रहन्ता, सोऽप्यमित्र इति अवश्यहन्तव्यः तव वाक्यं कर्तव्य च अयं धर्मो भगवन्निष्ठो आगन्तुक एतेषां हरि स्फुरती-त्युक्तदोषवतोऽपि स्थाने गमनं प्रार्थयन्ति अन्यथैवं प्रेरणस्य प्रेमविरुद्धत्वेन प्रेम्णोद्गमशुवानिति वचनं विरुद्धं स्यात्प्रिय-स्याप्रियञ्च न स्थापयितुमुचितम् इति च किञ्च तद्वनं सर्वं-प्राणिभिः त्यक्तं ये भूचराः ये चान्तरिक्षचराः अतः पशुगणैः पक्षिसङ्घविशेषेण वर्जितम् अतो ये पशुपालकाः ये वा देवपालकाः तैः सोऽवश्यं वध्यः ॥ २४ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

इतो गोवर्द्धनादविदूरे क्रोशचतुष्टयान्तरे तारफरा इति ख्याता स्थली तत्प्रदेशगतं वनम्—

"अस्ति तालवनं नाम धेनुकासुररक्षितम् ॥
मथुरापश्चिमे भागे अर्द्धयोजनम्" ॥

इति वाराहोक्तेः । पश्चिमे पश्चाद्भवे भागे इति नैर्ऋतकोणे इति व्याख्येयं तत्रैव तद्दर्शनात् तालानामालिभिरित्युक्तं श्रेणीषु तालानामविपर्ययत्वेनातिस्वादुजातीयत्वं व्यञ्जितम् । किन्तु धेनुकेन अवरुद्धानि वशीकृतानीत्यत एव हे राम ! तव महाबलस्य परीक्षा हे कृष्ण ! तथापि दुष्टनिबर्हणार्थमपरीक्षा च कर्तव्येति भावोऽयं तयोः सख्यभावेन स्वविक्रमख्यापनाम्न प्रेरणा विरुध्यते प्रत्युत वीररसोत्साहोद्दीपनत्वेन संगच्छत एवेति विशेषम् ॥ २१—२२ ॥

सोऽतिवीर्यमित्यादि तयोः पराक्रमोत्तेजनम् ॥ २३ ॥

आवयोरग्रे तस्य तदीयानां चातिवीर्यं अणुप्रायमात्र भविष्यतीति चेत्तर्हि वचनं तत्रत्याप्रकाशिमभयात् तान् तान् भोजितस्त्वयुष्मदाशिषः कुरुतामित्याहुः—तस्मादिति । ननु, कथं विज्ञि तद्वनं तद्भूतेत्यत आहुः, एष वै गन्धः आघ्रमाणोऽयं प्राकृतसमीरेणानीत इति भावः ॥ २४—२५ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तालानामालिभिः पङ्क्तिभिः सङ्कुलं व्याप्तम् ॥ २१—२४ ॥

भाषा टीका ।

हे राम ! हे भैया दाऊ ! हे बड़ी भुजान वारे ! हे दुष्टन के मारवे वारे, भैया कन्हैया ! या जगै सों थोरी दूर पै तालवन है ॥ २१ ॥

या जगे बहुत से तालन के फल गिरे परे हैं और गिर रहे हैं, परन्तु दुरात्मा धेनुकासुर के डर से उन फलन को कोई छू भी नहीं सके हैं, ताई सों रुक रहे हैं ॥ २२ ॥

हे दाऊ ! हे भैया कन्हैया ! वो गदहा को रूपधारन करने वारो असुर बड़ो बीर्य वारो है, और अपने सरीके बल वारे और भीतरे दैत्य वाके समीप में हैं ॥ २३ ॥

हे शत्रुन के मारने वारे ! वा जगे मनुष्य नहीं जाय सकें हैं ताई सों वो बन पशुपक्षि समूह सों वर्जित है ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

विषूचीनः सर्वतः प्रसृतः ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

सनगं सवृक्षम् ॥ २९ ॥

(१) वाञ्छाऽसीन्महतीति विज० शुको० पा० ।

समेत्य तरसा प्रत्यग्द्वाभ्यां पद्भ्यां बलं बली ।
निहत्योरसि काशब्दं मुञ्चन्[1] पर्यसरत्खलः ॥ ३० ॥
पुनरासाद्य संरब्ध उपक्रोष्टा पराक् स्थितः ।
चरणावपरौ राजन् ! बलाय प्राऽक्षिपद्रुषा ॥ ३१ ॥
स तं गृहीत्वा प्रपदोर्भ्रामयित्वैकपाणिना ।
चिक्षेप तृणराजाऽग्रे भ्रामणत्यक्तजीवितम् ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रत्यग्भ्यां पश्चिमाभ्यां काशब्दमिति गर्दभजातिस्वभावानुकरणं पर्यसरत्परितोऽधावदित्यर्थः ॥ ३० ॥

उपक्रोष्टा गर्दभः पराक्प्रतिमुखः अपरौ पश्चिमौ बलाय बलं हन्तुम् ॥ ३१ ॥

तृणराजस्तालः ॥ ३२ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सखुर्वेयं वयं कृष्णेत्यादि मुहुरुभयसम्बोधनमतिवैयग्र्यं सूचयति—कृष्णरामेति । स्नेहेनाऽस्माकं कदाऽपि लोभो नाऽसीत् नवनीतादिलुब्धत्वात्तस्य, तत्संपर्केणैव लोभितचेतसामिति श्रीरामं प्रत्येवोक्तिः तेन च नर्मणा निजदुर्लभप्रार्थनदोषो निरस्तः एवं मुहुः प्रार्थनेऽप्यनङ्गीकारमिवाशङ्क्य सप्रणयरोषमाहुः वाञ्छाऽस्तीत्यादि ॥ २६ ॥

धृतौ साहाय्याय परितो वेष्टितौ प्रभू तेषां प्रहर्षार्थं स्वसामर्थ्यं दर्शयन्तौ ॥ २७ ॥

यद्यप्येवमस्याग्रे प्रवेशादिकमादौ प्रार्थितत्वात्ततः श्रीकृष्णस्यापि तत्कौतुके तत्र गौणायमानत्वात् तालानिति बहुत्वमेकस्य कम्पनेनैव सङ्घट्टितानां तेषां बहूनां कम्पात् सम्यक् परितः कम्पयामासेति विवक्षितं दूरे पतन्तु न तु शिरसीत्येतदिच्छया किंवा बाहुभ्यां द्वाभ्यामेव बहूनां तेषां युगपद्ग्रहणात् सम्यक् परितः कम्पयामासेति महाबलत्वमावेद्य ॥ २८ ॥

तदेवं चिन्तितं सर्वां पृथ्वीं परितः कम्पयामासेति तस्य पूर्वोक्तमतिर्वीर्यस्य दर्शितम् ॥ २९ ॥

निरर्थां हत्वा महत्त्व यतो बली साधारणदेवताऽपेक्षया बलवत्त्वेन बलिमानीत्यर्थः । काशब्दं कुत्सितशब्दम् आर्षः कादेशः, पर्यसरत् पुनः पद्भ्यां हनने छिद्रान्वेषणाय परितो बभ्राम यतः खलः तारतम्यज्ञः ॥ ३० ॥

आसाद्य निकटीभूय उपक्रोष्टा निकटे काशब्दं कुर्वन् पराक् विमुखं स्थितः सन् पुनरेत्य ॥ ३१ ॥

एकेनैव पाणिना पदयोर्गृहीत्वा भ्रामयित्वा च प्रपदोरिति पाठस्त्वार्षः, पादयोरग्रभाग इत्यर्थः । पूर्वं तु तत्प्रहाराङ्गीकारः

बालवधानन्तरोपायेन खरस्य तेनात्मनोऽश्वत्वं प्रख्यापयितुम् ॥ ३२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हे कृष्ण ! तत्फलगन्धेन लोभितानि चेतांसि येषां तेषां नोऽस्माकमुक्तानि फलानि प्रयच्छ प्राशय देहि हे राम ! महती वाञ्छा तत्फलाऽनुबुभूषा वर्तते यदि रोचते तर्हि गम्यतां न वयं नियन्तुं प्रभवाम इति भावः ॥ २६ ॥

इत्थं सुहृदां वचः श्रुत्वा तेषां प्रियं कर्तुमिच्छया प्रहस्य गोपैर्वृतौ प्रभू रामकेशवौ तालवनं प्रति जग्मतुः ॥ २७ ॥

तत्र बलो रामः प्रविश्य बाहुभ्यां तालान्परितः कम्पयन् कथं मतङ्गज इवौजसा बलेन फलानि पातयामास ॥२८॥

तदा पततां फलानां शब्दमाकर्ण्य रासभरूपोऽसुरः वसुधां क्षितितलं कम्पयन्नभ्यधावत् ॥ २९ ॥

बली रामं स बलवत्सुरः समेत्य पाश्चात्याभ्यां पादाभ्यां तरसा बलेन उरसि निहत्य काशब्दं गर्दभध्वनिं मुञ्चन् खरः पर्यसरत्परितश्चचार ॥ ३० ॥

पुनराश्वासाद्य संरब्धः क्रुद्धः उपक्रोष्टा गर्दभः पराङ्मुखं स्थितः हे राजन् ! अपराऽपरौ पाश्चात्यौ पादौ रामाय प्राक्षिपत् प्रयोजयामास ॥ ३१ ॥

तदा स रामस्तमेकेनैव पाणिना पादयोर्गृहीत्वा भ्रामयित्वा भ्रमणेन त्यक्तं जीवितं येन तं तृणराजाग्रे तालाऽग्रे चिक्षेप प्राऽक्षिपत् ॥ ३२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नृभिरमुक्तपूर्वाणि विष्वक् सर्वत्राऽश्नातीति विषूचीनः सर्वत्र उत्पादितमानित्यर्थः । विशेषेण पूयते प्रायोऽभिवृद्धेरिति शेषः ॥ २५ ॥

लोभ आकाङ्क्षा "लुभ गार्ध्ये" "गृधु अभिकाङ्क्षायाम" इति धातुः अदनाकाङ्क्षा चेत्काऽवसरे भविष्यामीति तमाह—वाञ्छेति ॥ २६ ॥ २७ ॥

मतङ्गजः वारणः ओजसा बलेन अपष्टम्भेन वा "ओजोऽष्टम्भबलयोः" इति च ॥ २८ ॥

रासभः गर्दभः नगैर्वृक्षैः पर्वतैश्च सहितम् ॥ २९ ॥

(१) पर्यचरदिति—विज० पा० ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

काराब्दं गर्दभजातिजं कर्णनिष्ठुरशब्दं पर्यसरन्त परितो-ऽधावत ॥ ३० ॥

उपक्रोष्टुं क्रोशातिरत्र चेपार्थः क्षेप्तुं पराङ् स्थितः प्राङ्-मुखः ॥ ३१ ॥

पदोः पादयोः भ्रामणेन परिभ्रमणकरणेन ॥ ३२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

किञ्च, तत्र अनुक्तपूर्वाणि दिव्यानि सन्ति. केचिदुक्तपूर्वा-ण्याहुः, अन्यथा कथं तेषां कामनेति। यद्यपि भोगो-त्पद्यते तथाऽपि चौर्येण भक्षणं सम्भवति, तानि च फलान्य-त्यन्तं सुरभीणि सौरभ्यं तु तेषां प्रत्यक्षसिद्धमेव तदाह—एष वै सुरभिर्गन्ध इति। विषूचीनः परितः प्रसरद्रूपः अत एव सर्वतो गृह्यते एवं, दुर्लभतां फलोत्तमत्वं, चोक्त्वा तानि प्रार्थ-यन्ते—प्रयच्छेति। दाने भगवानेव समर्थ इति कृष्णेत्युक्तं तस्य सर्वत्र स्वत्वात् अन्येन प्रतिबन्धनिवृत्तावपि परकं न ग्रहीतुं शक्यं तत्र कामनायां हेतुः गन्धलोभितचेतसामिति गन्धेन लोभितं चेतो येषाम् ॥ २५ ॥

न केवलमिदानीमेव चित्तलोभः किन्तु पूर्वमपि वाञ्छाऽऽसी-दित्यहसी उत्सुको राम इति राम! एकवचनमित्युक्तम् अतिनिर्बन्धे कदाचित्कोपं कुर्यात् गन्तुं चालिङ्गमवेदिर्भावत्कत्वाहुः—यदि रोचत इति। यदि गन्तुं रोचते ॥ २६ ॥

ततो गतावित्याह—एवमिति। सुहृदां स्वभावत एव हितं कर्तव्यं तथापि तेषां वचनं श्रुतम् अतः सुहृदामेव प्रियचिकीर्षया तत्र गतौ अन्यथा अक्लिष्टकर्मा भगवान् निरपराधिनं कथं मारयेत् अत एव भगवता मारितोऽपि मित्रहितं च कर्तव्यम् अतः प्रहस्य तेषामाग्रहं दृष्ट्वा कोपनिवृत्तिं वाञ्छतीति वा सामान्यकार्यमित्युभौ जग्मतुः गोपैर्वृतावित्ति कर्तव्यार्थनिर्धारः अन्यथा तैः सह न गच्छेतां शङ्काभावार्थमाह—प्रभू इति ॥ २७ ॥

तत्र गत्वा यत्कृतवन्तौ तदाह—बल इति। अक्लिष्टकर्मा भग-वान् बहिरेव स्थितः बलस्तत्र प्रविश्य बाहुभ्यां तालान् सङ्कम्पयन् फलानि पातयामास यानि सुपक्वानि तानि कालेन पतन्ति। ननु, विद्यमानेषु फलेषु किमिति बहूनि पात-यन् मतङ्गज इवेति मतङ्गजः सर्वाण्येवानुपयुक्तान्यपि पातयति बलजनितकम्पात् स्तुत्यर्थम् उपायेनापि पातनं सम्भवतीति ताद्-दृश्यमाह, ओजसेति। स्वबाहुबलेनैव ॥ २८ ॥

ततो यज्जातं तदाह, पततां फलानां शब्दं श्रुत्वा असुरे-ष्वपि रासभोऽधमः असुरापेक्षया असुरपशवोऽधमाः तत्रापि गर्दभः तस्य निर्भयागमने हेतुमिव सामर्थ्यमाह, सनगं परि-कम्पयन्निति। गोवर्धनेन सहितं सर्वभूतलं कम्पयन् ॥ २९ ॥

आगत्य बलभद्रं ताडितवानित्याह—समेत्येति। मिलित्वा निकटे समागत्य तरसा प्रत्यक्भूतो जातः विपरीतमुखस्ततो द्वाभ्यां पद्भ्यां बलं बलभद्रं उरसि निहत्य ताडयित्वा काराब्दं रास-भशब्दं मुञ्चन्नुच्चारयन् पर्यसरत् परितो वेष्टनमिव भ्रमणं कृतवान् जातिस्वभावोऽयमिति ननु, महान् फलार्थी स्वस्थाने समागतः स्वयमेव फलान्युत्पाद्य गृह्णाति तत्र कथमागत्य ताडनमनुचितं कृतवांस्तत्राह—खल इति। बलभद्रोऽपि स्वयमेवागतस्तत्स्थान इति सकृदपराधः सोढः ॥ ३० ॥

तावताऽपि स न निवृत्त इत्याह—पुनरासाद्येति। पुनर्निकटे गत्वा क्रोधसंरब्धः उपक्रोष्टा शृगालतुल्यो गर्दभः पराक् स्थितः पुनर्विमुखो भूत्वा अपरौ चरणौ पुनर्बलाय प्राऽक्षिपत् समागत्य प्रक्षेपपर्यन्तं क्रोधोऽनुवृत्त इति ज्ञापयितुमन्ते कपटयुक्तं सम्बोधनं स्तेहेनुपन्यस्याह ॥ ३१ ॥

तदा द्वितीयाऽपराधे बलभद्रो मारितवानित्याह—स तमिति। अपदोः पदाग्रयोर्गृहीत्वा एकपाणिनैव तं भ्रामयित्वा तृण-राजस्य तालवृक्षस्योपरि प्राहिणोत् यथा यस्तो भगवता भ्रमणस्यान्तरेव मृत इत्याह, स्वकं जीवितमिति। स्वकं जीवितं येन ॥ ३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

नोऽस्मभ्यं प्रयच्छ यतोऽस्माकं वाञ्छाऽस्ति ॥ २६ ॥

प्रहस्येत्यहो गर्दभोऽप्येवं बलीयसम्भावयाम्बभूवेत्यस्य वा अधमेवति माव: ॥ २७—२८ ॥

सनगं कुञ्जपर्वतैरपि सहितम् ॥ २९ ॥

प्रत्यङ्मुखाभ्यां पश्चिमाभ्यां द्वाभ्यां काराब्दमिति गर्दभ-कण्ठानुकरणं पर्यसरत् परितोऽधावत् ॥ ३० ॥

संरब्धः कोऽपि उपक्रोष्टा निकट एव काराब्दं कुर्वन् पराङ् पृष्ठीकृत्य स्थितः ॥ ३१ ॥

तं धेनुकं अपदोः पद्योरग्रभागे इत्यर्थः। तृणराज-स्तालः ॥ ३२ ॥ ३३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

विषूचीनः सर्वतः प्रसृतः ॥ २५—२८ ॥

नगैर्वृक्षैः सहितं सनगम् ॥ २९ ॥

प्रत्यक् पश्चिमाभ्यां द्वाभ्यां पद्भ्यां काराब्दं गर्दभशब्दं मुञ्चन् पर्यसरत् परितोऽधावत् ॥ ३० ॥

उपक्रोष्टा गर्दभः संरब्धः क्रुद्धः सन् पुनरासाद्य पराङ् अनभिमुखः स्थितः सन् अपरौ पाश्चात्यौ चरणौ बलाय हन्तुं क्रुधा प्राऽक्षिपत् ॥ ३१ ॥

तृणराजाग्रे तालशिरसि ॥ ३२ ॥ ३३ ॥

---

भाषा टीका।

हे प्रभो! आज तांई वे सुगन्धी फल काहू ने नहीं खाये देखो ये बड़ी सुन्दरगन्ध कैसी चली आवै है ॥ २५ ॥

हे कृष्ण! उन फलन की सुगन्ध सों हमारो तो चित

तेनाहतो महातालो वेपमानो महाशिराः ।
पार्श्वस्थं कम्पयन् भग्नः स चान्यं सोऽपि चापरम् ॥ ३३ ॥
बलस्य लीलयोत्सृष्टखरदेहहता हताः ।
तालाश्चकम्पिरे सर्वे महावातेरिता इव ॥ ३४ ॥
नैतच्चित्रं भगवति ह्यनन्ते जगदीश्वरे ।
ओतं प्रोतमिदं यस्मिंस्तन्तुष्वङ्ग यथा पटः ॥ ३५ ॥
ततः कृष्णं च रामं च ज्ञातयो धेनुकस्य ये ।
क्रोष्टारोऽभ्यद्रवन्सर्वे संरब्धा हतबान्धवाः ॥ ३६ ॥
तांस्तानापततः कृष्णो रामश्च नृप ! लीलया ।
गृहीतपश्चाच्चरणान् प्राहिणोत्तृणराजसु ॥ ३७ ॥
फलप्रकरसङ्कीर्णं दैत्यदेहैर्गतासुभिः ।
रराज भूः सतालाग्रैर्घनैरिव नभस्तलम् ॥ ३८ ॥
तयोस्तत्सुमहत्कर्म निशाम्य विबुधादयः ।
मुमुचुः पुष्पवर्षाणि चक्रुर्वाद्यानि तुष्टुवुः ॥ ३९ ॥
अथ तालफलान्यादन् मनुष्या गतसाध्वसाः ।
तृणञ्च पशवश्चेरुर्हतधेनुककानने ॥ ४० ॥

भाषा टीका ।

सुभाय गयो, हे राम ! तुम सबन की बड़ी इच्छा है जो तुमें कहे तो चलो ॥ २६ ॥

ऐसे सुहृदन के वचन कूं सुनकें सुहृदन की प्रिय करबे की इच्छा सूं दोऊ भैया हंसिकें गोपन कूं साथ लेकें तालवन कूं जात भये ॥ २७ ॥

पहिले वा वन में श्रीबलदेवजी घुस गये, तालके वृक्षन को हलाय २ कें फलन कूं गिराये, जैसे कोई बड़ो मत- कुञ्ज पराक्रम सों गिरावतो होय ॥ २८ ॥

गिरबे वारे फलन को शब्द सुनिके वो गर्दभरूप धेनुका- सुर पर्वत सहित भूतल कंपावतो दौर के सम्मुख आवत भयो ॥ २९ ॥

दाऊजी के समीप आयके नेक पीछे कों हटकें पिछाड़ी के दोऊ पायन की दुलत्ती सों दाऊजी के वक्षःस्थल में मार के हेंकतो भयो वो खल पीछे को हटगयो ॥ ३० ॥

हे राजन् ! क्रोध में भरो भयो धेनुकासुर फिर आयकें मुखफेर के ठाड़ो भयो क्रोध कारिकें बलदेवजी कों फिर पिछले पांवन की दुलत्ती फेंकत भयो ॥ ॥ ३१ ॥

श्रीबलदेवजी ने वाके दोनों पायन कों पकड़के एक हाथ सों फिराय के ताल वृक्ष के ऊपर फेंक्यो वाके तो फिरायवेई में प्राण निकल गये ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्पृष्ठेन खरदेहेन हतैराहताः चकम्पिरे अकम्पन्त ॥ ३४ ॥

यस्मिन्निदं विश्वमोतमूर्ध्वतन्तुषु पट इव प्रथितम् प्रोतं तिर्यक्तन्तुषु पटवदेव संग्रथितम् सर्वतो ऽनुस्यूतं चेत्यर्थः ॥ ३५—३६—३७ ॥

घनैर्नभ इव भूतलं रराज तत्र फलप्रकरसङ्कीर्णमिति दैत्यदेहैश्च सतालाग्रैः सङ्कीर्णमित्यश्चेतनीलघनसादृश्य- सम्पादनम् ॥ ३८—३९ ॥

आदन्नभक्षयन् ॥ ४०—४१ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

चकारादपरोऽपि परमित्येवं बहूनि बहून् कम्पयन्तो भग्ना इति ज्ञेयम् ॥ ३३ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

पूर्वं तु फलान्येव पतन्तीदानीन्तु वृक्षाः स्वयमपि पतिता इत्याह—तेनाहत इति । तेन बलभद्रेण रासभदेहेन वा भ्रा समन्तात् हतः महातालोऽपि वेपमानो जातः ततो बृहच्छिराः स्थूलाग्रिमभागः कम्पेन स्थिरीभवितुमशक्तः स्वपार्श्वस्थं वृक्षं कम्पयन्नेव मध्ये भग्नः सोऽपि पूर्ववत् वेपमानः पार्श्वस्थं कम्पयन् भग्नः सोऽप्येवमपरः एवं सा पङ्क्तिः सर्वापि पतितेत्यर्थः ॥ ३३ ॥

किञ्च न केवलमेका पङ्क्तिः पातितेति किन्तु सर्वे एव वृक्षा वेपमाना जाता इत्याह–बलस्येति । साक्षाद्बलरूप एवायम् अतस्तेन लीलयाप्युत्सृष्टखरदेहेन हतेन वृक्षेण भा सर्वतो हतास्ताला महावातेरिता इव चकम्पिरे, अस्य क्रियाशक्तिरनेकपरम्परायामपि न शान्ता सर्वात्मकत्वादस्य यत्रैवास्य क्रियाशक्तिर्व्याप्नोति तत्सम्बन्धात्तत्र स्थिताऽपि क्रियाशक्तिरुद्गच्छति तथा चान्यस्पर्शे पुनरन्यत्र स्थिताप्युद्गच्छति यथा काष्ठेषु वह्निराधारमपि न स्थापयतीति वह्निसमानधर्मा वायुरत्र दृष्टान्तीकृतः महावातेन स्पृष्टो गुप्तोऽपि वायुरुद्गतो महानेव भूत्वान्यमप्येवमुद्बोधयतीत्यन्तं महानेव भवति ॥ ३४ ॥

इदं बलभद्रचरित्रमाश्चर्यमिव मत्वा समाधत्ते नैतच्चित्रमिति—नेदं कर्म बलस्य किंस्विद्विष्टस्य भगवतस्तत्राह–भगवति नैतच्चित्रमिति । किञ्च, अनन्तोऽयं सर्वसंहर्त्ता सङ्कर्षणः तस्य तालवृक्षमात्रकम्पनं किमाश्चर्यं यं कालं स्मृत्वा जगदेव कम्पते किञ्च, जगदीश्वरोऽयं जगतो नियन्ता ईश्वरस्याज्ञयैव सर्वे कम्पन्ते "यद्भयाद्वाति वातोऽयम्" इत्यादि वाक्यात् प्रथमप्रहारपर्यन्तं बलभद्रः ततो व्यथाप्रतीकारार्थमुपायान्वेषणे भगवदुपदेशे स्मृते सहसैवाविष्टो भगवान् तथा कृतवान् अन्यथा वायुरूपो कम्पन एव वृक्षभङ्गो भवेत् किञ्च यस्मिन् सङ्कर्षणे अहंममाभिमानाधिष्ठातरि सर्वमेव जगदोतं प्रोतञ्च समवायरूपत्वान्निमित्तरूपत्वाच्च तन्तुभिः पटः ओतः प्रोतश्च दीर्घतन्तव ओताः तिर्यक्तन्तवः प्रोताः तथा सर्वमेव जगत् भगवति समवेतत्वेन ग्रथितत्वेन च स्थितम् अतो हस्तचालनेन सर्वजगत्कम्प उचितः किमाश्चर्यं वृक्षाणां महाकम्पने ॥ ३५ ॥

एवं धेनुकवधं भगवत्सामर्थ्यं चोक्त्वा प्रसङ्गात्तत्सम्बन्धिनां सर्वेषां वधमाह–तत इति । ते तु बहवो मूर्खाः कृष्णं रामं च धेनुकस्य ज्ञातयो ये धेनुकवधेन क्लिष्टा हतबान्धवाः क्रोधसंरब्धाः सन्तः क्रोष्टारो गर्दभाः आक्रोशयुक्ताः अभ्यद्रवन् चकारद्वयेन गोपानप्यभ्यद्रवन् तदा प्रतिगोपं रामः कृष्णः आविर्भूतौ अभवतः अतो बहुधा कृष्णं बहुधा राममिति ज्ञापयति ॥ ३६ ॥

तदनुमतरक्षार्थं सर्वानेव मारितवन्तावित्याह–तांस्तानिति । य एवाग्रे आगतास्त एवाग्रे मारिताः कृष्णो रामश्चेति यस्य यस्याग्रे पतन्ति नृपेति सम्बोधनं पूर्ववत् तेषां वधे न कोऽपि प्रयास इत्याह, लीलयेति । गृहीतौ पश्चाच्चरणौ येषां सर्वेषामेवान्तरिक्षमरणार्थं कुम्भारोपिततालचक्रदूरीकरणार्थं च तृणराजस्येव प्राहिणोत् रामः कृष्णश्चेति एकैकवचनम् ॥ ३७ ॥

ततो यज्जातं तदाह–फलप्रकारैः फलसमूहैः सङ्कीर्णैर्दैत्यदेहैर्हतैस्तालाग्रैश्च संकीर्णा व्यस्ता भग्ना ये तालास्तालाग्रशिरांसि तैरपि सङ्कीर्णा तत्रं भूतलं रराज शोभामेव प्राप्तवत् न तु भूशोभा काचिन्नष्टा तत्र दृष्टान्तः घनैर्नभ इवेति निर्मलं नभः सूर्यसहितं चन्द्रनक्षत्रसहितं यथा शोभते तथा घनैरपि सम्यक् शोभते घनानां सर्वजनापेक्षाविषयत्वात् श्रीसम्बन्धेतानि नीलपीतान्तरजातियुक्तानि अतिनीलानि फलानि रासभास्तु धूसराः तालाग्राश्च श्यामाः मेघा अपि तथैव ॥ ३८ ॥

वेदफलं तयोः सर्वजगत्प्रसिद्धं जातमिति ज्ञापकमाह–तयोरिति । सुमहत्कर्म धेनुकवधलक्षणं विबुधादयो गन्धर्वादयः पुष्पवर्षाणि मुमुचुर्वाद्यानि चक्रुस्तुष्टुवुश्च त्रिविधानां अयं हर्षनिधानम् अनेन देवानां हितार्थे वध उक्तः ॥ ३९ ॥

एवं सपरिकरे धेनुकवधो निरूपितः भगवता तु तालफलानि न दत्तानि परं स्वेच्छयैव सर्वैर्भक्षितमित्याह—अथेति । भिन्नप्रक्रमेण तालफलान्यादन्, सर्वे एव मनुष्याः गतसाध्वसाश्च जाताः तृणं च पशवश्चेरुः हतो धेनुको यत्र तादृशे कानने तत्र औषधी तृणं न शुष्कं भवतीति चकारात् वन्यो योऽपि सुखिनो जाताः ॥ ४० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

उत्सृष्टेन खरदेहेन हतैस्तालैराहताः प्रागाघाताः ॥ ३४ ॥

विश्वम् ओतं अप्रतन्तुषु पट इव ग्रथितं प्रोतं तिर्यक्तन्तुषु पटवदेव ग्रथितं सर्वतोऽनुस्यूतं वर्तत इत्यर्थः ॥ ३५॥३६॥

हे नृप ॥ ३७ ॥

फलप्रकरसङ्कीर्णा यथा स्यात् तथा भू रराज कैः दैत्यदेहैः निर्भिन्नतालाग्रसहितैः तेषां स्वतः श्यामत्वात् रुधिरोक्षितत्वाच्च घनैः श्यामरक्तैर्नभस्तलमिव "तलं स्वरूपाधारयोः" इति विश्वः ॥ ३८ ॥ ३९ ॥

मनुष्याः तत्रस्थाः पुलिन्दादय एव न तु गोपाला आदन् गर्दभरक्षितत्वेन फलेषु घृणोत्पत्तेः ॥ ४० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तैर्विपोत्सृष्टेन खरदेहेन हतैस्तालैराहताः चकम्पिरे अकम्पत ॥ ३४ ॥

नैतच्चित्रमिति श्लोकः वासुदेवस्य सङ्कर्षणाख्या द्वितीया मूर्तिः बलो न तु केवलशेषावतार इति ज्ञापयति ॥ ३५।३६।३७।३८।३९ ॥

आदन् अभक्षयन् ॥ ४० ॥

---

### भाषा टीका ।

धेनुकासुर कूं मारिके जा वृक्ष पै फैंक्यो तासूं बड़ो भारी ताल वृक्ष दूसरे ताल पै गिरयो तासौं दूसरो समीप में ताल वृक्ष हो सो गिरयो ताकी ठोकर सौं और वाकी सौं और या प्रकार अनेक ताल वृक्ष गिरत भये ॥ ३३ ॥

श्रीबलदेवजी ने लीलाई सौं फक्यौं जो गधा के देह सौं जो ताड़ित भयो परंपरा सौं वाते जो ताड़ित भये एके के

कृष्णः कमलपत्राक्षः पुण्यश्रवणकीर्तनः ।
स्तूयमानोऽनुगैर्गोपैः साग्रजो व्रजमाव्रजत् ॥ ४१ ॥
तं गोरजश्छुरितकुन्तलबद्धबर्हवन्यप्रसूनरुचिरेक्षणचारुहासम् ।
वेणुं क्वणन्तमनुगैरनुगीतकीर्तिं गोप्यो दिदृक्षितदृशोऽभ्यगमन् समेताः ॥ ४२ ॥
पीत्वा मुकुन्दमुखसारघमक्षिभृङ्गैस्तापं जहुर्विरहजं व्रजयोषितोऽह्नि ।
तत्सत्कृतिं समधिगम्य विवेश गोष्ठं सव्रीडहासविनयं यदपाङ्गमोक्षम् ॥ ४३ ॥
तयोर्यशोदारोहिण्यौ पुत्रयोः पुत्रवत्सले ।
यथाकामं यथाकालं व्यधत्तां परमाशिषः ॥ ४४ ॥
गताध्वानश्रमौ तत्र मज्जनोन्मर्दनादिभिः ।
नीवीं वसित्वा रुचिरां दिव्यस्रग्गन्धमण्डितौ ॥ ४५ ॥
जनन्युपहृतं प्राश्य स्वाद्वन्नमुपलालितौ ।
संविश्य वरशय्यायां सुखं सुषुपतुर्व्रजे ॥ ४६ ॥
एवं स भगवान् कृष्णो वृन्दावनचरः क्वचित् ।
ययौ राममृते राजन् ! कालिन्दीं सखिभिर्वृतः ॥ ४७ ॥
अथ गावश्च गोपाश्च निदाघातपपीडिताः ।
दुष्टं जलं पपुस्तस्यास्तृषार्ता विषदूषितम् ॥ ४८ ॥

भाषा टीका ।

लगरे ताल वृक्ष ऐसे कंपित भये जैसे बडी आंधी में हवें लगे हैं ॥ ३४ ॥

जगदीश्वर भगवान् श्रीअनन्त जो बलदेवजी हैं उनमें जे बात कछु विचित्र नहीं हैं, जिनमें ये सब जगत् तंतुन में पटके नाईं ओत प्रोत है अर्थात् पोहि रह्यो है (या जगे लंबे तंतु ओत और आडे तंतू प्रोत हैं ऐसे जानमो चाहिये) ॥ ३५ ॥

ताके पीछे धेनुक के जात के और जो गधा है, ते सब राम कृष्ण के ऊपर बडे संरंभ से दौरे क्यों कि ? उनको बंधु मारो गयो ता शोक सों ॥ ३६ ॥

हे नृप ! तबतौ कृष्ण और बलदेव दोनो भैया जो जो गधा आवत गये तिन २ के पांव पकरि २ के ताल वृक्षन के ऊपर फेकत गये ॥ ३७ ॥

फलन के बिखरबे तें और मरे दैत्यन के देहन तें और ताल वृक्षन के भग्न भागन तें पृथिवी ऐसे शोभित होत भई कि-जैसे चित्र विचित्र मेघन ते आकाश शोभित होवै ॥ ३८ ॥

दोऊ भैयान के या बडेभारी कर्म कों देख के देवतादिक पुष्पन की वर्षा करत भये बाजे बजावत भये और स्तुति करत भये ॥ ३९ ॥

या प्रकार जब धेनुकासुर मारो गयो तब कछु दिन पीछे या तालवन में मनुष्य फल खायबे लगे, और पशु तृण चरबे लगे ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

गोरजोभिश्छुरितेषु कुन्तलेषु बद्धं बर्हं वन्यानि प्रसूनानि च यस्य रुचिरमीक्षणं चारुहासश्च यस्य तं च तं च दिदृक्षितदृशो दिदृक्षिता दर्शनोत्कण्ठायुक्ता दृशो यासां ताः ॥ ४२ ॥

मुकुन्दस्य मुखपद्मगतं सारघं मधु भृङ्गैः यो विरहस्तस्माज्जातं तापं स च तासां सत्कृतिं पूजां, कां सत्कृतिं ? कथं वा कृतां ? तामाह, सव्रीडेति । सव्रीडेन सलज्जेन हासेन विनयो यथा भवति तथा यदेतत्, किं तत् ? अपाङ्गमोक्षः कटाक्षदर्शनं तथा तां सत्कृतिं प्राप्येत्यर्थः ॥ ४३-४४-४५-४६-४७-४८-४९-५० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवं प्रसङ्गेन दिनान्तरस्य धेनुकवधलीलामपि समाहृत्य प्रथमगोचारणदिनसन्ध्यालीलामपि यथायुक्तमित्थं वर्णयति तद्दिन-सन्ध्यालीलामाह षड्भिः-तत्र सामान्यव्रजजनदृश्यमानत्वेन वर्णयति-कृष्ण इति । कृष्ण एवाभिव्यक्तं सर्वचित्ताकर्षकत्वं यस्य विविधलीला-कमलेक्षणः । कमलपत्राक्ष इति सौन्दर्यं ज्ञाप

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

च्छविकोणतया विस्तीर्णतीक्ष्णतया च कैशोरांशव्यक्तिरपि पुण्ये श्रवणकीर्तने यस्य स इति सर्वसद्गुणकर्मादिमाहात्म्यम् अनेन व्रजजनानां तत्तद्गुणादेव विरहार्त्त्युपशमस्तावकानां च चित्तोल्लासः सूचितः एवं स्वरूपशोभां दर्शयित्वा आवरणशोभामाह, स्तूयमान इत्यादिना ॥ ४१ ॥

अथ तदुल्लङ्घितबाल्यैः श्रीगोपकुमारीविशेषैरपि दृश्यमानत्वेन तं वर्णयंस्तेषामनुरागोत्पत्तिं स्पष्टयति—तमिति द्वाभ्याम् । ईक्षणमवलोकनं गोरज इत्यादिना उपरि मध्ये तले च श्रीमुखशोभा दर्शिता अन्यवेषसद्भावेऽपि तत्तन्मात्रस्यैव वर्णनं सायं वनादागतत्वेन वैशिष्ट्यात् वेणुक्वणनं स्वभावत एव विशेषतश्च तासां प्रहर्षणार्थमाकर्षणार्थं च उपेतिरागमात्रगानमथवेणुक्वणनोपगानत्वेन गीता कीर्त्तिर्यस्य तम् अत्र साग्रजतानुक्तिस्तस्य तत्रानुपयुक्तप्रायत्वात् अत एव छलेन व्यवहितत्वात् गुरुजनसङ्गतौ हि तस्याग्रजताभाव एव प्रवर्त्तते तस्य व्रजागमननिश्चये गोरजश्छुरितेति सूचितगोरज उद्धूतिर्वेणुक्वणनमनुगोपगीतकीर्त्तित्वमिति हेतुत्रयं ज्ञेयम् अभिगमने हेतुः, दिदृक्षिताः सञ्जातदिदृक्षा दृशो यासामिति, अत्र प्रथमतो गोचारणेन दूरगमनतो विविधशङ्कोत्पत्तिः तथा पूर्वताधुनागोपालने कालविलम्बेनागमनं चोत्कण्ठावैशिष्ट्ये हेतुः समताः अन्योन्यं मिलिताः एकमत्येन सख्यात् तत एव भयलज्जादिहानेश्च तत्र स्वस्वगृहतः सर्वासामेव युगपद्भावनाच्छ्रीकृष्णाध्वनि वा पूर्वमेवागतानामुपस्थानविशेषे वा ज्ञेयम् ॥ ४२ ॥

ततश्च यद्वृत्तं तदाह—पीत्वेति । तैर्व्याख्यातम् स्वमाधुरीपरिवेषणेन वियोगदुःखान्मुक्तिं ददातीति मुखे कुन्दानि दन्तरूपाणि यस्येति वा मुकुन्दः तस्य मुखाब्जसारघमासिभृङ्गस्वरूपैः पीत्वेति तत्सौन्दर्यपरमासरत्वा नेत्रमात्रात्मिकाः सत्यो भृशं वीक्ष्येत्यर्थः । प्रकृत्यासिरूप इत्यादिवत्तृतीया किञ्च, भृङ्गरूपकेन श्रीमुखावयवेषु ततस्ततो मुहुर्दृष्टिश्च यच्चनिता व्रजयोषित इति समुत्कण्ठाविशेषः अहीति वात्रौ विहरतापासावः सूचितः । तद्दर्शनं व्रजेन्द्रमहादौ तत्सन्दर्शनादिसिद्धेः सत्कृतिमाह—सव्रीडो हासोपतादृशोऽपि विनयः रहस्यप्रियजनोचितव्यवहारोपयुक्तताद्य यथा स्यात्तथा तद्रूपाभिरेवं यद्विलेतस्योक्ता तां किं रूपां अपाङ्गमोक्षकटाक्षदर्शनरूपामित्यर्थः यद्वा यद्यासां अपाङ्गमोक्ष एव सत्कारोपकरणत्वेन विद्यते यत्र तादृशं यथा स्यात् तथा सत्कृतिं समधिगम्येति यद्वा, यत्सम्यगधिगमनं सव्रीडेत्यादिरूपं अपाङ्गस्य मोक्षो यत्र तद्रूपं च क्लीबत्वमार्षं वा कर्मसत्कृतिं यः अपाङ्गमोक्ष इत्यर्थः । तद्विशेषणं सव्रीडहासेति यद्वा व्रजयोषितः पूर्वोक्तास्तद्विशेषाः मुकुन्दस्य सर्वदुःखमोचकत्वेन तादृशनाम्नः श्रीकृष्णस्य मुखसारघं मुखकमलस्य सौन्दर्यरूपं मकरन्दमक्षिभृङ्गैरक्षिभिरेव भृङ्गैः पानपात्रैः पीत्वा समास्वाद्य अहि यो विरहकृतेन यस्तापस्तत्प्राप्तिजां तृष्णां तां जहुः रात्रिजविरहतापं तु प्रातर्दर्शनेन जहुरेवेति भावः । यत् यत्रैव सव्रीडौ हासविनयौ यत्र तादृशमपाङ्गमोक्षं कटाक्षनिःक्षेपरूपां तत् सत्कृतिं ताभिः कृतं सम्मानं समधिगम्य मत्वा गोष्ठं गोष्ठान्तर्निजगृहं विवेशेति ॥ ४३ ॥

एवं तासामानन्दं व्याख्यायानुकरणं मात्रोर्द्वयोराह—तयोरिति । पुत्रयोरिति । द्वयोरपि द्वौ प्रत्येव स्वपुत्रभावेन लालनभरं बोधयति—यथाकालमिति । शरदादौ सायं प्रदोषादौ च समयविधेयानुसारेणेत्यर्थः । यथा कामं पुत्रयोः स्वयोर्वा इच्छानुसारेण यथेत्यादिक्रयोर्विपर्ययेण प्राठः काचित् परमा उत्कृष्टा आशिषः उपभोगान् सम्पादितवत्यौ यतः पुत्रवत्सले अनेन प्रागङ्कारोपणालिङ्गनचुम्बनादिकं कुशलप्रश्नसर्वाङ्गनिरीक्षणादिकञ्च सूचितम् ॥ ४४ ॥

आशीर्विधानमेव प्रपञ्चयति—गतेति युग्मकेन । गताध्वानेति न श्रमो अश्रमः स चेश्वरत्वात् श्रीमन्नरलीलाङ्गीकारेण तस्याभावस्त्वनश्रमः श्रम एवेत्यर्थः । सम्प्रति शेषां विश्रामवेलायां विगताध्वश्रमावित्यर्थः । आदिशब्देन केशप्रसाधनजलमार्जनादीनि स्नेहभरसंभ्रमेण क्रमोल्लङ्घनान्मज्जनस्यादावुक्तिः । यद्वा, जलेन धूलिमपसार्य पश्चात् सुगन्धिद्रव्येण तदुनीवीमिति अजहल्लक्षणया परिधानवस्त्रं च उत्तरीयस्य यज्ञोपवीतात् प्रागनपेक्षत्वात् अनुलेपनादिशोभाव्यवधायकतया तस्याग्रहणाच्च भूषणानामनुक्तिः वस्त्रादीनामिव स्नानत्वाभावेन तेषामपरिवर्तनात् प्रातरेव तदाधिक्यौचित्याच्च जननीभ्यामुपहृतं परिविष्टं प्राश्य प्रकर्षेण सुखेनाशित्वा उपलालितौ ताम्बूलादिमुखवासार्पणासुखगोष्ठीशिरोघ्राणादिभिः प्रतिलालितौ तत्र व्रजे तन्मध्ये अवरोधान्तर्महाप्रासादे तथा च पाद्मोत्तरखण्डे वर्णितम्—

"तस्मिंश्च भवने श्रेष्ठे रम्ये दीपैर्विराजिते ।
श्लक्ष्णे विचित्रपर्यङ्के नानापुष्पविवासिते ॥
तस्मिन् शेते हरिः कृष्णः शेषे नारायणो यथा" ।

इति वरशय्यायां दिव्यपर्यङ्कोपरि संविश्य श्रीमाप्य अस्वापं अनेन क्रीडार्थं निद्रायां क्षणं विलम्बो योज्यते तदेव सूचयति सुखं यथा स्यादिति सखिदासादिकृतोपस्कृतताम्बूलसमर्पणचामरान्दोलनपदाब्जसम्वाहननर्मगोष्ठीगीतगानादिसुखप्रकारेणेत्यर्थः ॥ ४५—४६ ॥

अत्राध्यायसमाप्त्यकरणं क्रमप्राप्तामपि पूर्वत्र दुःखमयतया त्यक्तां कालियदमनलीलामनुस्मृत्य वैचित्र्यात् अनुस्मृतायाश्च तस्याम् आवेशादेव तां प्रथममागतां वक्तुमारब्धामपि तन्मात्रमुक्त्वाध्यायः समापयिष्यते । पुनश्च विहरत्यपि तत्र स्वयं भगवति यमुनायाः स दोषो नापगत इति श्रोतृणामपरितोषमाशङ्क्य विलोक्य दूषितां कृष्णामित्येकेनैव पद्येन सा लीला सूचयिष्यते राजप्रश्नसमुद्दीप्यमानावेशादेव तु विस्तारयिष्यते अथ तथैवोपक्रमे ते एवमित्यादिना एवं पूर्वोक्तप्रकारेण गोपालनभृङ्गाद्यनुकरणादिनेत्यर्थः । स व्रजजनैकजीवनभूतो वृन्दावनचरो भगवान् कृष्ण इति भगवत्तायामपि साङ्गचित्तविशेषं स्मरन्ति, क्वचित् कदाचित् गोचारणारम्भवर्षस्य निदाघे रामं विनेति अन्यथा तेन तादृशसाहसानिषेधमयमाशङ्कितया कालियह्रदप्रवेशो निवार्यैतेति तस्माच्च तस्मिन् दिन एव तत्र गत इति भावः । वृतो वेष्टितः श्रीमुखसन्दर्शनाद्यर्थं सर्वेषामेव प्रेमस्पर्धया परितो ऽन्तिकागमनात् विशेषतः स्नेहेन व्रजेश्वर्या अनुशासनाच्च ॥ ४७ ॥

गावश्च गोपाश्च अथानन्तरमेव पपुरिति यावत्तावदन्यत्र चालिता अपि निदाघातपपीडिताः सद्यस्तज्जलमपूर्वं यमुना-

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तीरादूरस्थं पशुनया तद्दोषाज्ञानादन्तर्गत्वा प्रविश्य पयः गोपाश्च तदपि ज्ञात्वा एव किं तु परिनद्धं तद्दोषं जानन् तासां मृतिं दृष्ट्वा शरीरजदुःखगा पपुरिति क्रमम् अत एव गोपाश्चेति तद्-नन्तरमुक्तं ताश्च ते चाग्रगामिनः कतिचिदेव क्षणाः श्रीकृष्णस्य काङ्क्षितत्वेन पश्चात् त्यक्तुं तैरशक्यत्वात् सङ्कुचितातीतगोचार-णाय समन्तात् भागश एव गन्तुं तेषां योग्यत्वात् पश्चादागामिना श्रीकृष्णेन दृश्यमानानां गवामपि तत्पानासम्भवात् दुष्टत्वे कारणमाह–विषदूषितामिति ॥ ४८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

सारघं मधु ॥ ४१—५२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

श्रोतॄणां कीर्तयतां च पुण्यावहं यच्छ्रवणं कीर्तनं च तद्यस्य सः कृष्णः साग्रजो व्रजमाविवेश ॥ ४१ ॥

तं व्रजमाविशन्तं दिदृक्षिताः दृशः यासां ताः गोप्यः समेताः समुदिताः श्रीकृष्णमभिमुखमाजग्मुः कथम्भूतम् ? गोरजोभिश्छुरितेषु कुन्तलेषु बद्धं बर्हं वन्यानि प्रसूनानि च यस्य रुचिरमीक्षणं चारुः हासश्च यस्य अनुगैः उपगीता कीर्तिर्यस्य तं मुकुन्दस्य मुखसारसं मुखपद्मं पीत्वा तद्गतं मधु पीत्वेत्यर्थः । अह्नि यो विरहस्तज्जं तापं जहुः तासां व्रजयोषितां सत्कृतिं बहुमानं समधिगम्य, सत्कृतिश्च कथमित्याह, सव्रीडं सहासं सविनयं च यथा तथा अपाङ्गयोर्नेत्रान्तयोर्मोक्षः प्रसरणं यस्मिंस्तत् तत् रूपं तासां सत्कृतिं प्राप्य गोष्ठं विवेश ॥ ४२ ॥ ४३ ॥

यथाकाममिच्छानुगुणं कामानुगुणं च यथा तथा परमाशिषः कामान् व्यधत्तामकुर्वताम् ॥ ४४ ॥

तदेव वर्णयन्नाह—तत्र गृहेऽङ्गमर्दनादिभिर्गताध्वसम्भवश्रमौ ययोस्तौ रुचिरं नवं वस्त्रं वसित्वा दिव्याभ्यां स्रग्गन्धाभ्यामलङ्कृतौ जनन्योपहृतं पात्रे दत्तं स्वादु मृष्टमन्नं प्राश्य उपलालितौ सुखं यथा तथा सुप्तवन्तौ ॥ ४५–४६ ॥

कदाचिद्रामं विनैतरैः सखिभिर्वृतः हे राजन् ! कालिन्दीं यमुनां ययौ ॥ ४७ ॥

निदाघे ग्रीष्मर्तौ य आतपः तेन पीडिता अत एव तृषार्ताः तस्याः कालिन्द्याः कालीयविषेण दूषितमत एव दुष्टं जलं अपुः पीतवन्तः ॥ ४८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गोरजसा छुरितकेशपाशैः बद्धानि बर्हवन्यप्रसूनानि पिञ्छ-कुसुमपुष्पाणि यस्य स तथा गोरजश्छुरितकुन्तलबद्धबर्हवन्यप्रसूनश्च रुचिरं ईक्षणं चारुहासश्च यस्य स तथा तम् ॥ ४२ ॥

मुकुन्दस्य मुखमेव सारघं मधु सरघायाम्यं सारघं "सरघा मधुमक्षिका प्रोक्ता" इति हलायुधः । अह्नि विरहजं तापं याता-

पाङ्गमोक्षः कटाक्षान्तरीक्षणं व्रीडया सहितः सव्रीडश्चासौ हासश्च सव्रीडहासः तस्य विनयो राहित्यं विशेषेण प्रसिद्धौ यस्य स तथा तासां सत्कृतिं सत्कारं समधिगम्य प्राप्य ॥ ४३–४४ ॥

मज्जनं स्नानम् उन्मर्दनं शरीरमर्दनं तैलं तैर्वा वस्त्रं वसित्वा आच्छाद्य ॥ ४५ ॥

प्रस्तृत पल्लवं संविश्य शयित्वा ॥ ४६ ॥

इदानीं कथान्तरं वक्तुमुपक्रमते, एवमिति ॥ ४७ ॥

निदाघातपः ग्रीष्मर्तुभवरविकिरणभव उष्णविशेषः तेन पीडिताः ॥ ४८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्र सामान्यव्रजजनदृश्यमानत्वेन वर्णयति—कृष्ण इति । एकेन अथ परमतेजस्वित्वेन झटिति तत्रवृक्ताङ्कुश वाक्यैः श्रीगोपकुमारीविशेषैरपि दृश्यमानत्वेन वर्णयंस्तेषामनुरागोत्पत्तिं स्पष्टयति–तदिति द्वाभ्याम् ॥ ४१—४२ ॥

मधुपायेव भृङ्गाकृतत्पाने स्वतः प्रवृत्तत्वात् तैः द्वारभूतैः स्वयमपि पीत्वा सत्कृतिमाह—सव्रीडो हासो यत्र तादृशो विनयरहस्यप्रियजनोचितव्यवहारो यत्र एतादृशं यथा स्यात्तथा यत् स्यात् तद्रूपामित्यर्थः । यद्वित्येतत् प्रोक्तां तां किं रूपां अपाङ्गमोक्षं कटाक्षदर्शनरूपामित्यर्थः ॥ ४३ ॥

परमाशिषः उत्कृष्टोपभोगान् तत्र गोष्ठमध्ये निजावरोध-प्रासादे गतः आध्वसः अध्वसम्बन्धि श्रमो ययोः टेरलोप आर्षः सविसर्गपाठे गताध्वश्रमावित्यर्थः । षष्ठ्यलुक् छान्दसः स्वपति स्वपां विश्रमशालायां विगतश्रमावित्यर्थः । एवं गोपाङ्गनभृङ्गा-नुकरणोक्तप्रकारेण ॥ ४४—४७ ॥

दुष्टत्वकारणमाह–विषदूषितामिति ॥ ४८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं वनलीलामुक्त्वा पुनर्व्रजे भगवतः समागमनमाह–कृष्णः कमलपत्राक्ष इति । कृष्णः सदानन्दः व्रजमाव्रजविति व्रजस्थानां भक्तानामानन्द-हेतुरुक्तः तावत्कालं विरहतप्तानां कथं तापं दूरीकरिष्यतीत्याशङ्क्याह, कमलपत्राक्ष इति । कमलपत्रवत् आयते विशाले परतापापनोदके अक्षिणी यस्य अनेन दृष्ट्यैव तापहारित्वमुक्तम् । ननु, कारणभूते आध्यात्मिके पापे विद्यमाने कथं तापनिवृत्तिस्तत्राह, पुण्यश्रवणकीर्तन इति । पुण्ये श्रवणकीर्तने यस्य अनेन पापं जलपूरेणेव नाश्यत इति निरूपितं श्रवणं प्रविशति कथापूरो हृदयं ततः सर्वमेव दोषमादाय मुखतो निःसरति एवं कियत्कालपर्यावृत्त्या सर्वथैव शुद्धो भवति, नन्वेवमपि सति भगवत्कीर्तिः कथं प्राप्यते ? तत्राह–स्तूयमानोऽनुगैरिति । अनुगा भक्ता गोपाश्च तेन भगवच्चरित्रं सर्वथैव सुखमुक्तम् अलौकिकेनापि प्रकारेण साग्रज इति धेनुकवधस्तेन कृत इति तं पुरस्कृत्य सहैवागतौ भगवान् तत्र पृथक् पृथक् यथायथम् ॥ ४१ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

सम्विश्येति रात्रिकृत्यमुक्तं जनन्यादिभिः सह शयननिषेधार्थमुक्तं सुखं सुषुपतुरिति लीला आह्निकी सम्पूर्णा निरूपिता व्रजे हि नात्यन्तं धर्मप्रधानता अतो न रात्रिकृत्यं किञ्चिदुक्तं व्रजस्यानुक्तिसिद्धत्वेऽपि कथनेन सम्पूर्णा व्रजे स्वप्रियाभिः सह शयनं सूच्यते ॥ ४६ ॥

एवमाह्निकं भगवत्कृत्यं निरूप्य वैषयिकं भगवत्कृत्यं वक्तुं कालीयह्रदगमनार्थं प्रस्तावनामाह—एवं स भगवानिति। एवं निरोधार्थं वृन्दावनचरो भगवान् जातः तत्र हेतुः स भगवानिति। स इति निरोधार्थमेवागतः भगवानिति सामर्थ्यं कृष्ण इति नाम्ना "अनेन सर्वदुर्गाणि यूयमञ्जस्तरिष्यथ" इति वाक्यार्थं बोधयितुं प्रवृत्तिरुचितेति ज्ञापयति—क्वचित् कदाचित् कस्मिंश्चिद्देशे तत्कार्यं स्वसाध्यमेवेति ज्ञात्वा राममृते कालिन्दीं ययौ वनं ह्युभयत्रापि भवति पर्वतसमीपे कालिन्दीसमीपे च तत्र निदाघे प्रायशः कालिन्दीसमीप एव गोचारणं सन्निविष्टमिति तेषां समानशीलतोक्ता अपरिहार्यतापि अन्यथा भगवान् स्वयमेव गच्छेत् ॥४७॥

एवं सम्भूय गतानां मध्ये भगवानत्रैव स्थितः भिन्नप्रक्रमेणैव गावो गोपालाश्च गता इत्याह—अथेति। कस्मिंश्चिद्वृक्षच्छायायां भगवन्तं स्थापयित्वा जलं पाययित्वा पीत्वा चागमिष्याम इत्यनुज्ञाप्य दूरे गन्तव्यमिति बोधिता अपि विशेषतो न निषिद्धा निदाघातपेनात्यन्तं पीडिता दुष्टं तस्या यमुनाया जलं पपुः सा हि यमभगिन्यतो दुष्टा वा स्यात् दत्तवती सर्वदोषो न तस्याः किन्त्वन्यकृत इत्याह—विषदूषितमिति। विषेणात्यन्तं दूषितम् उष्णस्पर्शादिनापि दूष्यते तदर्थं विशेषः ॥ ४८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

वनाद्गोष्ठप्रवेशलीलामाह त्रिभिः—कृष्ण इति। व्रजस्थानां चित्तस्याकर्षणं कमलपत्राक्ष इति नेत्रनासयोः पुण्ये धन्ये श्रवणे कर्णौ यतस्तथाभूतं कीर्तनं वेणुगानं यस्य स इति श्रोत्रयोरप्याकर्षणं ध्वनितम् ॥ ४१ ॥

व्रजबालानां विशेषत आकर्षणमाह—तं गोप्योऽभ्यगमन् गोरजोभिश्छुरितेषु व्याप्तेषु कुन्तलेषु बद्धं बर्हं वन्यप्रसूनानि च यस्य रुचिरमीक्षणं चारुहासश्च यस्य ईक्षणाद्धासो वा यस्य तं दिदृक्षिताः सञ्जातदर्शनेच्छा दृशो यासान्ता इति गोपीकर्तृकं लज्जाभयहेतुकं वर्जनमगणयन्त्यो दृशस्तदाकरणत्वं परित्यज्य स्वतन्त्रकर्तृत्वं प्राप्ता इति ध्वनिः तेन च प्रतिवेशिनां श्रोत्रघ्राणेन्द्रियाणां वेणुसौस्वर्याङ्गसौरभ्यसम्पल्लाभमालक्ष्य मात्सर्येणैव स्वेषां रङ्कत्वमसहमानाः स्वाश्रयभूता गोपीः परित्यज्यैव सपत्नीभवितुमिव चापल्यात् स्वयमेव कृष्णपार्श्वं चलिता इत्युत्प्रेक्षा व्यज्यते। समेता इति सर्वा एव कुलवध्वः स्वस्वगृहान् विहाय चलन्ति पश्य मामेव किं त्वं वारयन्ती वाधिष्यसीति स्वस्वश्वश्रूः प्रत्युत्तरयन्त्य इति भावः ॥ ४२ ॥

अभिगम्य किं चक्रुरित्यत आह—पीत्वेति। मुकुन्दस्य मुखे सारघं स्मितरूपं मधु अक्षिभृङ्गैः पीत्वा नवपाङ्गभृङ्गैः। पीत्वेत्यनेन कृष्णस्यादृष्टगोपीकस्यान्यमनस्कस्यैव यत् साहजिकं स्मितं तत् ताभिर्निःशङ्कतया सम्पूर्णनेत्रैरेव पीतमिति गम्यते ततश्च द्वितीयक्षणे कृष्णस्य तत्रावधाने सति हर्षोत्थो हासस्तासां यदैवाजनि तदैवोद्भूतया लज्जया स सम्पूर्णावलोको हासश्चावृतः वामकरकृतमवगुण्ठनं च किञ्चित्संवृत्तं तत्तदावरणव्यञ्जितो विनयश्चाभूदित्येतत् सर्वमाधुर्यमेव कृष्णोऽनुबभूवेत्याह—तत्सत्कृतिं तादृशावलोकनरूपां सत्कृतिं ताभिः कृतं किञ्चिदुपायनप्रदानरूपं सम्माननमित्यर्थः। समधिगम्य विदग्धशिरोमणित्वात् सरसास्वादं स्वीकृत्य गोष्ठं विवेश अत्र सत्कारसमधिगमक्रिययोः क्रमेण सव्रीडेत्यादिविशेषणद्वयं तेन च व्रीडया सहितो हासो विनयश्च यत्र तत् यथा स्यात्तथा तासां सत्कृतिं यतः प्राप्नुवतः अपाङ्गस्य मोक्षो यत्र तद्यथा स्यात्तथा समधिगम्य गोष्ठं विवेशेत्यर्थः। ताभिः कृता सव्रीडहासविनया तादृशावलोकरूपा सत्कृतिः तस्याश्चाधिगमः कृष्णेन तत्प्राप्नुवदपाङ्गमोक्षसहितः कृत इति फलितम् अत्र सम्पूर्णनेत्राभ्यां दर्शने तासां लज्जया विमुखीभावः स्यादतस्तत्कटाक्षप्राप्त्यर्थमेव कृष्णेनापाङ्गमोक्ष इति ज्ञेयम्। अथैतद्विवरणं ताभिः प्रत्येकं स्वनयनाञ्जनावौत्सुक्यं सञ्चारिणा स्वपरिजनेनानीयावलोकनकुसुममर्पितं तथैव स्वाधरपल्लवाञ्जलौ हर्षसञ्चारिणोप्यानीयार्पितं हासकुसुमं च गृहीत्वा एतद्वस्तुद्वयमेवास्मद्गृहे तत्र भवते द्वयसहितं तत् कृपया गृह्यतामिति यदैव दर्शितं तदैव तदुपायनद्वयमानेतुं कृष्णेन स्वप्रेष्योऽपाङ्गोन्वयुज्यत स च महाचपलः पूर्वमेव तद्द्वयं तासामन्तर्गृहगतमपि चोरयितुमुद्यतोऽतः कृष्णेन बद्ध्वैव स्थापित आसीत् ताभिस्तस्मिन्नुपायनद्वये प्रकटीकृत्य स्मिते सति स एव बन्धान्मोचितः सन् शर इव शीघ्रं गत्वा तद्द्वयमेव ग्रहीतुमारभत तत्क्षण एव तासां कोपाधिकारिण्या सख्या व्रीडया प्रादुर्भूय तदुपायनद्वयमावरीतुं प्रवृत्ते ततश्च तयोर्विग्रहे प्रवृत्ते सन्ध्यर्थं विनये च तासां परिजने समायाते स च बलवान् कृष्णप्रेष्योऽपाङ्गो व्रीडाविनयाभ्यां सहितमेव सहासावलोकमुपायनमाकृष्यानीय कृष्णाय प्रादात् स च तन्निकामातिदुर्लभमहारत्नमिव प्राप्य स्वहृदयमन्दिराभ्यन्तर एव स्थापयामासेति कथा सत्कारव्यञ्जितोपलभ्या यद्वा व्रजयोषितो ह्रितोऽह्नि तापं जहुः, कास्ता व्रजयोषितः? यासामपाङ्गमोक्षं तत्तां प्रसिद्धां सत्कृतिं समधिगम्य गोष्ठं विवेश कीदृशं सव्रीडहासविनयम् अत्र यत् पदस्योत्तरवाक्यगतत्वान्न तत्पदापेक्षा ॥ ४३ ॥

यथाकामं पुत्रयोर्वाञ्छितं भक्ष्यादिकमनतिक्रम्य यथाकालं प्रदोषादिकं भोजनकालमनतिक्रम्य परमाशिषो भक्ष्यपरिधेयादिभोगान् ॥ ४४ ॥

न श्रमोऽश्रमः स चेश्वरत्वात् नरलीलया तस्याभावस्त्वनश्रमः गतोऽध्वनोऽनश्रमः श्रम एव ययोस्तौ नीवीं परिधानवस्त्रम् ॥ ४५ ॥

एवं कार्त्तिकगोपाष्टमीदिनलीलां समाप्य तद्वर्षीयनिदाघगतस्य कस्यचिद्दिनस्य लीलामाह — एवमिति। राममृते इति

विषाम्भस्तदुपस्पृश्य दैवोपहतचेतसः ।
निपेतुर्व्यसवः सर्वे सलिलान्ते कुरूद्वह ! ॥ ४९ ॥
वीक्ष्य तान् वै तथाभूतान् कृष्णो योगेश्वरेश्वरः ।
ईक्षयाऽमृतवर्षिण्या स्वनाथान् समजीवयत् ॥ ५० ॥
ते संप्रतीतस्मृतयः समुत्थाय जलान्तिकात् ।
आसन् सुविस्मिताः सर्वे वीक्षमाणाः परस्परम् ॥ ५१ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अस्मत्संयाग्निकस्नानार्थं मातृभ्यां तस्य तद्दिने गृह एवोपवेशितत्वात् ॥ ४७ ॥

गाव इति पश्चात् शनैरागच्छन्तं कृष्णमनपेक्ष्य तृषार्त्तत्वात् द्रुतगामिन्यः तदनुद्रुताः केचन गोपाश्च ॥ ४८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पुण्ये श्रवणकीर्तने यस्य सः ॥ ४१ ॥

तं श्रीकृष्णं व्रजमाविशन्तम् दिदृक्षिता दर्शनोत्कण्ठायुक्ता दृशो यासां ताः गोप्यः अभ्यगमन् अभिमुखमाजग्मुः कथम्भूतम् ? गोरजोभिश्छुरितेषु कुन्तलेषु बद्धानि बर्हवन्यप्रसूनानि यस्य रुचिरमीक्षणं चारु हासश्च यस्य तं च तं च ॥ ४२ ॥

व्रजयोषितः मुकुन्दमुखस्य मुकुन्दमुखपङ्कजस्य सारघं मधु यावन्मृङ्गैः पीत्वा अह्नि यो विरहस्तसात् जातं तापं जहुः मुकुन्दोऽपि तत्सत्कृतिं तासां पूजां समभिगम्य गोष्ठं विवेश सत्कृतिमेवाह-सव्रीडेन हासेन विनयो यथा भवति तथा वलेतदपाङ्गमोक्षं कटाक्षदर्शनम् ॥ ४३ ॥

परमाशिषः प्रियान् कामान् ॥ ४४ ॥

रुचिरां नीवीं सुखदं वस्त्रं वसित्वा सुखं सुषुपतुः ॥ ४५-५० ॥

---

भाषा टीका ।

पुण्य रूप है जिनकी कथा को श्रवण और कीर्तन ऐसे कमलदललोचन श्रीकृष्ण अपने अनुचर गोपन सहित और बड़े भैया बलभद्रजी सहित ब्रज में प्रवेश करत भये ॥ ४१ ॥

गायन के खुर की रज अलकन पै पलकन पै कपोलनकी झलकन पै पर रही है, मोर पिच्छ के मुकट कों धारण करें हैं, वन के फूलन के गुच्छा माला लटकावें सुन्दर चितवन मनोहर जाकी हसन सदा जिनको जस गाय रहे ऐसे श्रीकृष्णचन्द्र वेणु कौं बजावत जब वनतें आवत भये, दर्शन की इच्छा जिनकी ऐसी आंखन वारी सब गोपी झुरमिलके आवत भई ॥ ४२ ॥

वे सगरी ब्रजकी वनिता अपने नेत्र रूपी भौरान तें प्यारे के मुख कमलतें सुन्दरता रूपी अमृत कूं पीके दिन भर तांई प्यारे के विरह सों भयो जो ताप ताकों छोड़त भई ॥ श्रीकृष्णचन्द्रजी उन गोपीन की नम्रता और लाज भरी मुस्कयान कटाक्ष भरी चितवन रूप भेंट कूं लेके अपने ब्रज में प्रवेश करत भये ॥ ४३ ॥

अपने पुत्रन पै प्यार करनवारी मैया यशोदा और रोहिणीजी दोनोंई दोऊ भयान की जैसी इच्छा और जैसो समय वाई के अनुगुण उनके मनोरथन को पूर्ण करत भई और आशीर्वाद देत भई ॥ ४४ ॥

घर में आयकें स्नान उबटनो इत्यादिक उपचारन सों मार्ग को परिश्रम दूरि भयो जिनको ऐसे कृष्ण बलदेव दोऊ भैया सुन्दर पीतांबर नीलाम्बर को पहिर कें माला गंध चन्दन सों भूषित होय कें शोभा को प्राप्त होत भये ॥ ४५ ॥

इतनेई में मैया थार परोस के जो लाई सो बड़ो स्वादु वो अन्न दोऊ भैया जेंमत भये, ता पीछे मैया ने उपलालन करकें शय्या पे दोऊ भैयान कूं पौढ़ाय दिये, और कहानी कहवे लगीं, इतनेई में नींद जो आई सो ब्रज में सुख पूर्वक खूब सोवत भये ॥ ४६ ॥

हे राजन् ! या प्रकार श्रीवृन्दावन विहारी श्रीकृष्ण भगवान् कभऊ एकले बलदेवजी बिना आपही ग्वाल बालन कूं साथ लेकें यमुनाजी के तीर पै जात भये ॥ ४७ ॥

ता पीछे गरमी की धूपसों व्याकुल होयवेतें गऊ और ग्वाल बाल सब तृषा सों प्यासे होय गये और कालीके विष सों दूषित जो यमुना जल हो ताकूं पीवत भये ॥ ४८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सम्प्रति सद्य एव इता प्राप्ता स्मृतिर्यैस्ते सम्प्रतीतस्मृतयः यद्वा, सम्यक्प्रतीता प्रतिप्राप्ता स्मृतिर्यैस्ते तथेति ॥ ५१ ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
पञ्चदशोऽध्यायः ॥ १५ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

दोषाणां नाशो भवत्यलौकिकसुकृतेन च दिव्यभावोत्पत्तिः विश्वासार्थं मन्त्रोच्चारणम् ॥ ४९ ॥

ततो भगवत्कृत्यमाह—वीक्ष्येति। सर्वभावतोऽपि जानाति तथापि क्रीडायां साधनं वक्तव्यमिति योगेश्वरेश्वर इत्युक्तं योगस्यापि नियन्ता योगेन हि सर्वेषां ज्ञानं भवति तत्राप्ययं नियामकः किम्पुनः स्वज्ञाने वक्तव्य इत्यर्थः। योगेश्वराणामपीश्वर इत्युपदेष्टृणामप्ययं नियामक उक्तः तत्र हेतुः कृष्ण इति सदानन्दः तान् निरोधार्थमानीतान् वै निश्चयेन तथाभूतान् न तु मूर्छितान् स्वयमागत्य वीक्षणेन नूतनदेहान् निर्मायामृतवर्षिण्या दृष्ट्या समजीवयत् सर्वेऽपि प्राणा अमृता आधिदैविकाः तान् स्वदृष्ट्यैवानीय तेषु तेषु देहेषु वर्षति स्म नन्वेतावत्करणे को हेतुः? तत्राह, स्वनाथानिति। स्वस्य गजीवनादिति पुनर्विषसम्बन्धेऽपि न तेषां काचित् हानिः ॥ ५० ॥

तेषां पूर्वस्मात् वैलक्षण्यं तद्रूपताञ्च प्रतिपादयति—त इति। त एवैते जीवाः सम्यक् प्रतीता स्मृतिर्येषाम् अनुसन्धानं प्राप्तमेव भवति परं सर्ववृत्तान्तपुरस्सरं न भवतीति आधिदैविकभावमापन्नाः सर्वस्मृतियुक्ता जाताः अतः समुत्थाय जलसमीपं परित्यज्य प्रदेशान्तरं गताः सुविस्मिता जाताः एतावान् भावो भगवता विशेषतः कारितः अतो विस्मयः भगवद्भावस्य निगूढत्वात् ततः सर्व एव परस्परं वीक्षमाणाः प्रत्येकमुद्बोधका इव जाताः ॥ ५१ ॥

अत एवोद्बुद्धज्ञानाः पूर्वसिद्धं सर्वमेव ज्ञातवन्त इत्याह, अन्वमंसतेति। स्वयमेवानुमानं कृतवन्तः प्रायेणैवं भविष्यतीत्युत्प्रेक्षितवन्तः भगवद्भावस्याप्रत्यक्षत्वात् राजन्निति स्नेहसम्बोधनं तदग्रे वक्ष्यमाणं गोविन्दस्यानुग्रहेक्षणं यत्रेति तज्ज्ञातवन्तस्तदाह—विषं पीत्वा परेतस्यात्मनः स्वस्य पुनरुत्थानमिति भगवत्कृपादृष्ट्यैव जातमिति ज्ञातवन्तः एवं ज्ञानपूर्वो देहस्यैः प्राप्त इति प्रथमो निरोधो निरूपितः ॥ ५२ ॥

इति श्रीमद्भागवते सुबोधिन्यां श्रीमद्वल्लभदीक्षित-
विरचितायां दशमस्कन्धविवरणे (१)
द्वादशाऽध्यायविवरणम् ॥१२॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

देवो भगवांस्तस्येदं दैवं लीलाशक्तिवैभवं तेनोपहृतस्मृतयः व्यन्य इति लीलासौष्ठवार्थं योगमाययैव निद्रामापि तेषामनुकल्पाय तया दर्शनात् ॥ ४९ ॥ ५० ॥

ते जलाभ्रकात्समुत्थाय सुविस्मिता इति मृता एव वयं केन जीविताः केनाप्यौषधेन विषहरमन्त्रेण वा परस्परमिति सखे! किन्त्वमेतद्रहस्यं जानासीति प्रत्येकं प्रश्नात् एवं महासन्देहे प्रवर्त्तमाने भो वयस्या मां मयैवैतत्कारणम् "अनेन सर्वदुर्गाणि यूयमञ्जस्तरिष्यथ" इति गर्गाचार्यवचनस्मरणात् सम्यगवगतमिति केनाप्युक्ते सति सर्व एव सम्यक् प्रकारेण प्रतीता प्रतीतिविषयीकृता स्मृतिस्तदीया यैस्तथाभूता आसन्नित्यन्वयः ॥ ५१ ॥

मनु अनन्तरमेकमत्येन अजेऽदेवश्रीनारायणेनाविष्टस्य गोविन्दस्य अनुग्रहेक्षितमेव कारणममंसत यस्मात् पीत्वा विषमित्यादि ॥ ५२ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
दशमेऽस्मिन् पञ्चदशः सङ्गतः सङ्गतः सताम् ॥ १५ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

ताः आपश्च ते गोपाश्च तथा ते "पुमान् स्त्रिया" (१।२।६७) इत्येकशेषः सम्यक् प्राप्ताः स्मृतयो यैस्ते तथा ॥ ५१ ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
पञ्चदशाध्यायार्थप्रकाशः ॥१५॥

---

### भाषा टीका।

हे कुरुद्वह ! राजन् ! दैव सों हरयो गयो चित्त जिनको ऐसे गऊ ग्वालन ने जब वो जल पियो ताके पीछें सबन के प्राण निकस गये जलके किनारे पै सगरे गिरत भये ॥४९॥

योगेश्वरन केऊ ईश्वर श्रीकृष्ण उनकी ऐसी दशा देखिकें, आपही जिनके नाथ ऐसे उन गाय और ग्वालन कों अपनी अमृत वर्षिणी दृष्टि सों देखिकें जिवावत भये ॥ ५० ॥

वे सगरे तत्काल स्मृति को प्राप्त होयकें जलके किनारे ते उठिकें बड़े विस्मय को प्राप्त होयकें आपुस में देखन लगे ॥ ५१ ॥

हे राजन् ! ता पीछे सगरे ग्वाल बाल "विषहरे जल पीवने तें हम सबन के प्राण निकस गये, फिर जो अब हम जी उठे या में गोविन्द को अनुग्रह पूर्वक देखनोई कारण है" ऐसे मानत भये ॥ ५२ ॥

इति श्रीमद्भागवत दशमस्कन्धमें पञ्चदशो अध्यायकी,
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषाटीका समाप्ता ॥ १५ ॥

---

(१) [illegible]

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पञ्चदशोऽध्यायः ॥ १५ ॥

## ॥ षोडशोऽध्यायः ॥

॥ श्रीशुक उवाच ॥

विलोक्य दूषितां कृष्णां कृष्णः कृष्णाहिना विभुः ।
तस्या विशुद्धिमन्विच्छन् सर्पं तमुदवासयत् ॥ १ ॥

राजोवाच ।

कथमन्तर्जलेऽगाधे न्यगृह्णाद्भगवानहिम् ।
स वै बहुयुगावासं यथा ऽऽसीद्विप्र ! कथ्यताम् ॥ २ ॥
ब्रह्मन् ! भगवतस्तस्य भूम्नः स्वच्छन्दवर्तिनः ।
गोपालोदारचरितं कस्तृप्येताऽमृतं जुषन् ॥ ३ ॥

श्रीशुक उवाच ।

कालिन्द्यां कालियस्यासीद्ध्रदः कश्चिद्विषाग्निना ।
श्रप्यमाणपया यस्मिन् पतन्त्युपरि गाः खगाः ॥ ४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

षोडशे कालियस्योक्तो विग्रहो यमुनाह्रदे ।
तत्पत्नीभिः स्तुतेनाथ कृष्णेनानुग्रहः कृतः ॥
हत्वा रासभदैतेयान् भक्ष्यं तालफलान्यलम् ।
प्रीतोऽनृत्यत्फणारङ्गे कालियस्य कलानिधिः ॥

उदवासयत् निःसारितवान् ॥ १ ॥

बहूनि युगान्यावासो यस्य तमहिं स वै अहिरजलचरोऽपि अस्मिन्नन्तर्जले यथा येन प्रकारेणासीत्, अथवा बहूनि युगान्यावासो यथा भवति तथा तेन प्रकारेण स वै तत्रासीदिति कथ्यतामिति ॥ २ ॥

गोपालेन यदुदारं चरितमाचरितं तदेवामृतम्, अतः कथ्यतामिति ॥ ३ ॥

श्रप्यमाणं पच्यमानं पयो यस्य सः, अत उपरि गच्छन्तः खगा यस्मिन् पतन्ति ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

कृष्णामिति वर्णतो नामतश्च अतः कृष्णास्तस्या दुर्विषदूषितत्वेनाऽसह्यप्रतीकारमभिप्रेतम् । कृष्णेनाहिनेति, महादुर्विषमयत्वमुक्तं न केवलं तस्या एव तद्धितायाभूत् अपि तु सर्वेषामपि यतः कृष्णः कर्षति दुःखानीति अवतारादिविशिष्टस्य ब्रह्मस्य महातीर्थोद्धारणादिना जगतामपि, दमनादिना कालियस्यापि हिताचरणात् बाल्यलीलारसाविष्टस्यापि तस्य पूर्ववत् स्वावसरेण ऐश्वर्यमभ्युदयते इत्याह, विभुरिति ॥ १ ॥

भगवान् सर्वथापि प्रकारेण कर्तुं समर्थः तथापि कथं केन प्रकारेणेति, स च स च "बहुयुगावासम्" इति विभुत्वात् बहूनि युगानि आवासो यत्र तादृशं यथा भवति तथा यथा आसीत्तत्कथ्यतामित्येवान्वयः । विप्र ! हे परमविद्याप्रवीण ! तथा च याज्ञवल्क्यः—

"जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते ।
विद्यया याति विप्रत्वं त्रिभिः श्रोत्रियलक्षणम्" ॥

इति ॥ २ ॥

यद्यपि श्रीमुनीन्द्रेण तादृशोरुदुःखसङ्कुलया संक्षिप्य कथितं तथापि तद्ध्यानेन राज्ञा तल्लीलास्वादनाभिलाषादेव यथा दृष्टमिति तद्वाक्येनैव दर्शयति—ब्रह्मन्निति । भगवतः ऐश्वर्यादिषट्कयुक्तस्य भूम्नः सर्वथापि सर्वातिशायितस्य तत्रापि स्वच्छन्दवर्तिनः स्वैरलीलाप्रकाशिनः एवमेवम्भूतस्य गोपालजात्यनुरूपम् उदारं सर्वतोऽपि महत्परमानन्दवत् वा चरितं तज्जुषमाणः कस्तृप्येत् ? यतो हेतुः अमृतमिवेति ॥ ३ ॥

श्रीशुक उवाचेति तदेवं सिद्धस्य तथा सततं तस्मिन् जातस्नेहः सुखदुःखात्मकं सर्वमेव तात्पर्येण निवेदनीयमित्यभिप्रायेण श्रीव्रजवासिदुःखमयनिजदुःखात्मकमपि तन्निवेदयन् श्रीशुकः यथाश्रुतमेवोवाच न त्वन्यथैव विस्तारयांबभूव ॥ कालिन्द्यां ह्रद इति तस्या दक्षिणभागे वर्तमानस्य तस्य तद्रूपसंभवात्

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तस्याः प्रवाहस्तु सरतः पृथगेवोह्यः अन्यथा तद्दुर्विषजलेन यादव-कुलवासश्रीमधुपुर्यादिव्याप्तेः स तु कालियस्य विषाग्निना श्रप्यमाणपया आसीत् उपरिगाः ऊर्ध्वं गच्छन्तः खगा इति तत्रापि दूरगत्वमभिप्रेतम् ॥ ४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

कृष्णां यमुनाम् ॥ १ ॥

न्यगृह्णात् निगृहीतवान् ॥ २ ॥

भूम्नः अपरिच्छिन्नमहिम्नः गोपालोदारचरितं गोपालकाऽनुगुणमुदारचरितं तदेवामृतम् ॥ ३ ॥

श्रप्यमाणपयाः क्वथितजलाः ॥ ४—५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ कालीयदमनात्मकं कर्मानुवर्णयितुकामस्तावद्राज्ञः प्रश्नावसरप्रदानाय तत्सङ्गृह्य दर्शयति—विलोक्येति । कृष्णाहिना कालीयेन दूषितां कृष्णां यमुनां विलोक्यालोच्य तस्याः कृष्णायाः विशुद्धिमन्विच्छुः तं सर्पमुदवासयत्ततो निष्कासितवान् ॥ १ ॥

तत्र विस्मितः पृच्छति राजा—कथमिति द्वाभ्याम् । अन्तर्जले तत्राप्यगाधे तत्रापि यर्हि सर्पं कथं निगृहीतवान् ? स वै अहिर्बहूनि युगान्यावसतीति तथाभूतो यथा येन प्रकारेणासीत्तदपि हे विप्र कथ्यताम् ॥ २ ॥

आत्मनः शुश्रूषाधिक्यं व्यनक्ति—ब्रह्मन्निति । भूम्नः विपुल-माहात्म्यस्य स्वतन्त्रस्यापि लीलया गोपालस्य सतः यदुदारं चरितं तदेवामृतं जुषन् कः पुमान् तृप्येत न कोऽपि ॥ ३ ॥

विषाग्निना पच्यमानं पयो यस्मिंस्तस्य ह्रदस्योपरिगाः उपरि चरन्तः खगाः पक्षिणः पतन्ति पेततुः विषजलवायुप्रसार-मात्रेऽपि मूर्छिताः पतन्तीत्यर्थः ॥ ४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हरौ भक्तिमतां संसारविषं निर्वीर्यं भवतीति निदर्शयितुं अनन्तरातीताध्याये सङ्क्षिप्योक्तं कालीयनागमर्दनमाहात्म्यं प्रपञ्चयत्यस्मिन्नध्याये, तत्र राज्ञः प्रश्नमुत्थापयितुमाह—विलो-क्येति । कृष्णां यमुनां कृष्णाहिना कृष्णसर्पेण उदवासयत् ततोऽन्यत्रावासमकारयत् ॥ १ ॥

अगाधे अतलस्पर्शे न्यगृह्णात् निगृहीतवान् प्रसह्य गृही-तवानित्यर्थः । यथा येन प्रकारेणासीत् स प्रकारः ॥ २—३ ॥

श्रप्यमाणं क्वाथ्यमानं पयो जलं यस्मिन् ह्रदे स तथा यस्मिन् ह्रदे ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

बहुयुगावासमिति विश्रुतत्वात् बहूनि युगानि आवासो यत्र तादृशं यथा भवति तथा यथा स्यात्तथा कथ्यतामित्यन्वयः ॥ १ ॥

यद्यपि मुनीन्द्रेण तद्विशेषदुःखशङ्कया सङ्क्षिप्य कथितं तथा तदज्ञानेन वा तल्लीलासामान्याभिलाषादेव तथा पृष्ट-मिति दर्शयति ॥ २ ॥

ब्रह्मन्निति स तु तत्प्रीतये स्वदुःखकथानिवेदनाय च नास्य-त्समर्थोऽभिनिविश्य यथाश्रुतमेवावाचेत्यर्थः ॥ ३ ॥ ४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

इन्द्रियाणि समस्तानां मृत्यवः समुदाहृताः ।
त एव विषपूर्णानि कालीयस्य शिरांसि हि ॥
अतस्तदुपमर्दोऽत्र निरूप्यो हि त्रयोदशे ।
सन्तुष्टो भगवांस्तेषु स्वलीलां चेत्करोति हि ॥
भक्तिमार्गानुसारेण निस्तारो नान्यथा भवेत् ।
तेषां प्रपञ्चः कालिन्द्यस्ताश्चेत् कृष्णास्य सर्वथा ॥
ततोऽन्नस्येवेन्द्रियाणि भवन्त्याज्ञावशे हरेः ।
तदेव विषयश्चापि हरेर्भवति सर्वथा ॥
सर्वोपयोगरहितः पूर्वसम्बन्धहानतः ।
परीक्षेन्द्रियाणां हि निग्रहं कुरुते हरिः ।
परीक्षार्थं ततो देवः कालं प्रेरितवांस्तथा ।
स्वासक्तिश्चापि कर्तव्या निरोधे मध्यमे महान् ॥
अतः कर्तव्य इत्येव मुग्धभावं चकार ह ।
कथामात्रप्रभावाय सङ्क्षेपेणाहृतं पुरा ॥
अक्लिष्टकर्मा भगवान् ज्ञापयामास लीलया ।
दयमश्चापराधश्च परीक्षाकार्यमेव च ॥
स्तुतिः प्रसाद इत्यत्र षडर्थाः परिकीर्तिताः ।

तत्र प्रथमं सङ्क्षेपेण कथामाह—विलोक्येति । कृष्णां यमुनां कृष्णाहिना कालसर्पेण कालीयेन दूषितां विलोक्य समर्थो भगवान् तस्या विशुद्धिमत्र क्रीडार्थमन्विच्छन् तं सर्पमुदवासयत् ततो-ऽन्यत्र प्रेषितवान् सारूप्यं प्राप्तो हि भगवता निर्दुष्टः कर्तव्यः सारूप्यं प्राप्तेन च दोषो नान्येन निवारणीयः रूपान्तरेण च रूपान्तरदोषो न निवारणीय इति मर्यादा अतः कृष्णापदमयं विशुद्धिरिति सामर्थ्यं प्रकृतोपयोगिसारूप्यादेव न मारणं दुष्टे-केशत्वाच्च नर्तनम् । अत एव कलौ कृष्ण एव सर्वदोषनिवारकः यदि सर्वेन्द्रियेषु नृत्यति इन्द्रियकृतमपराधं च सहते अतो यमुना शुद्धा कर्तव्येति तस्याः प्रसिद्धायाः प्रसिद्धं सर्पं दूरी-कृतवान् ॥ १ ॥

राजा विशेषं पृच्छति—कथमिति स हि जानाति यद्विशेष यथा मत्स्यो बध्यते तथा कालीयो बद्ध इति अलक्ष्यस्य महतः कीदृशं बलिष्ठमिति साधनप्रकारप्रश्नः यदि लोके साधनमपि यन्त्रं स्यात् तदा न पृष्टव्यः स्यात् स तु नास्ति यतः स बहुयुगपर्यन्त-मावासो यत्र तादृशं यथा भवति तथा यथास्सीत् यदि तादृशं भवेद्बन्धनं पूर्वमेव निग्रहः स्यात् न चैतदस्मात्

विप्रुष्मता विषदोर्मिमारुतेनाभिमर्शिताः ।
म्रियन्ते तीरगा यस्य प्राणिनः स्थिरजङ्गमाः ॥ ५ ॥
तं चण्डवेगविषवीर्यमवेक्ष्य तेन दुष्टां नदीं च खलसंयमनावतारः ।
कृष्णः कदम्बमधिरुह्य ततोऽतितुङ्गमास्फोट्य गाढरशनो न्यपतद्विषोदे ॥ ६ ॥
सर्पह्रदः पुरुषसारनिपातवेगसङ्क्षोभितोरगविषोच्छ्वसिताम्बुराशिः ।
पर्यक्प्लुतो विषकषायविभीषणोर्मिर्धावन् धनुःशतमनन्तबलस्य किं तत् ॥ ७ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

विति यतो भगवान् अतः प्रकारं कथयेति प्रश्नः विप्रेति सम्बोधनं विशेषेण ज्ञानपूरणाय विशेषेण प्रकर्षेण वा कथ्यतामिति ॥ २ ॥

जलचरसाधारणबन्धनवदिदमपि भविष्यति अतो न वक्ष्यतीत्याशङ्कयासाधारणत्वेन भगवत्कथां श्रोतव्यत्वेन स्तौति, ब्रह्मन्निति । ब्रह्मन्निति सम्बोधनं ज्ञानायानुद्वेगाय च भगवत इति सर्वैव लीलाषड्गुणयुक्ता भविष्यतीत्यप्रयोजकत्वं निवारितं भूम्न इति सर्वत्र लीलाधिक्यं स्वच्छन्दवर्तिन इति लीलायां न कस्याप्यनुरोधः तत्रापि गोपालस्य लौकिकानां बुद्धिपरिग्रहार्थं यतमानस्य उदारं सर्वपुरुषार्थान् पात्रापात्रविवेकं परित्यज्य प्रयच्छतीति पुरुषार्थानामपेक्षितत्वात् सर्वैतदेव वक्तव्यं श्रोतव्यं च तदपि चरितं न तु कल्पितं तत्रापि सर्वदोषनिवारकं मृत्युनिवारकं च तदाहामृतम् इति किञ्च, अमृतं जुषन् किं कश्चित् तृप्येतेति लोकोक्तिः ॥ ३ ॥

भगवतोऽतिसामर्थ्यं ख्यापयितुं ह्रदस्वरूपमाह द्वयेन—कालिन्द्यामिति । कालियः कालीय इत्युभयं कालीयस्य सम्बन्धी कश्चित् ह्रद आसीत् सम्बन्धोऽपि वक्तव्यः विषाग्निना तस्यैव श्रप्यमाणमावर्त्यमानं विषेण व्याप्यमानं वा पयो यस्मिन् यस्मिन् ह्रदे आकाशमार्गेण उपरि गच्छन्तोऽपि खगादि मध्ये पतन्ति इत्युपरि दोषमर्यादा निरूपिता ॥ ४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

न्यगृह्णात् कालियं कृष्णो दर्शयन् स्वमपादृव्रजम् ।
स्तुतोऽहिभिः प्रसन्नस्तान् षोडशे निरसारयत् ॥

कृष्णां यमुनाम् उद्वासयत् तस्मान्निस्सारितवान् ॥ १ ॥

बहूनि युगानि व्याप्य आवासो यत्र तद्यथा स्यात्तथा आसीत् विशेषतः प्रकर्षेण कथ्यताम् ॥ २ ॥

गवां श्रवणेन सर्वभक्तश्रोत्रादीन्द्रियाणां च पावननोदारं भुवद्भूचरितम् ॥ ३ ॥

कालिन्द्यां ह्रद इति हरिवंशोक्तयोजनप्रमाणस्तस्याः क्षिप्तो मार्गे तत्प्रवाहेनास्पृष्ट एव अन्यथा तद्विषसम्पृक्तप्रवाहवती सा मथुरादिदेशस्थजनैर्व्यवहार्यैवाभविष्यदिति श्रप्यमाणं पच्यमानं पयो यस्य सः ॥ ४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

षोडशे कालीयनिग्रहस्तद्भार्याकृतं श्रीकृष्णस्तोत्रं, कालीयं प्रत्यनुग्रहश्च निरूप्यते, उद्वासयत् निःसारितवान् ॥ १ ॥

स अहिः बहूनि युगानि आवासो यथा भवति तथा केन प्रकारेण तत्रासीदिति कथ्यताम् ॥ २—३ ॥

कालिन्द्यां कालिन्दीसमीपे श्रप्यमाणं पच्यमानं पयो यस्मिन् सः ॥ ४ ॥

---

### भाषा टीका ।

ॐ कालीयफणामाणिक्यरञ्जितश्रीपदाम्बुजाय नमः ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—विभु श्रीकृष्ण यमुनाजी कूं काले नाग से दूषित देखिके, वाके विशेष शुद्धि की इच्छा करत वा कालिय नाग कूं यमुनाजी में से निकास देत भये ॥ १ ॥

राजोवाच ॥

राजा परीक्षित बोले, कि—हे श्रीशुकदेवजी महाराज ! भगवान् श्रीकृष्णचन्द्र वा अगाध जल के भीतर में काली नाग को कैसे दण्ड देत भये ? और वो काली जैसे वा जगे बहुत युगन सों वास करतो रह्यो सो आप कहिये ॥ २ ॥

हे ब्रह्मन् ! उन श्रीकृष्णचन्द्र भूमा भगवान् के ताऊ मे स्वच्छन्द धरवे वारे गोपाल रूपके उदार चरित रूप अमृत को सेवन करत करत कौन तृप्त होय सके ॥ ३ ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—कालिन्दी [ यमुना ] जी के बीच में एक बडो ह्रद रह्यो, जा में विषकी अग्नि सों सदा जल औटचो करतो हो, और वा ह्रद के ऊपर सों जो पक्षी उडके जाते तो वाहि में गिर परते हे ॥ ४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च, विप्रुष्मता अम्बुकणयुक्तेन विषोदतरङ्गस्पर्शिमारुतेन स्पृष्टा यस्य तीरगा म्रियन्ते स ह्रद आसीदिति ॥ ५ ॥

तं कालियं चण्डो वेगो यस्य तद्विषमेव वीर्यं यस्य तं कदम्बमिति भाविना श्रीकृष्णचरणस्पर्शमात्रेण स एकस्तदीरे न शुष्कः अमृतमाहरता गरुत्मता क्रान्तत्वादिति च

